# A DESCRIPTIVE CATALOGUE

OF THE

# SANSKRIT MANUSCRIPTS

IN THE

## GOVERNMENT ORIENTAL MANUSCRIPTS LIBRARY, MADRAS

BY

S. KUPPUSWAMI SASTRI, M.A.,

CURATOR, GOVERNMENT ORIENTAL MANUSCRIPTS LIBRARY, AND
PROFESSOR OF SANSKRIT AND COMPARATIVE PHILOLOGY,
PRESIDENCY COLLEGE, MADRAS.

*Prepared under the orders of the Government of Madras.*

VOL. XXII—Rhetoric and Poetics, Music and Dancing, and Śilpaśāstra.



MADRAS
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.

1918.

# ERRATA

| Page | Line | | | | |
|---|---|---|---|---|---|
| 8607 | 14 | For | प्रकान्त | Read | प्रक्रान्त |
| 8609 | 21 | ,, | समुद्रा | ,, | समुद्धा |
| 8612 | 4 | ,, | कण्टपाश | ,, | कण्ठपाश |
| 8614 | 7 | ,, | जाङ्घक | ,, | जाङ्घिक |
| | 18 | ,, | प्रसत्र | ,, | प्रसन्न |
| 8615 | 7 | ,, | मुदे | ,, | मुँदे |
| 8621 | 29 | ,, | Kāvyaprakāśa | ,, | Kāvyapradīpa |
| 8622 | 1 | Omit | 'End of Kâvyapradīpa' | | |
| | 15 | For | दोषा: | Read | दोषात् |
| 8630 | 25 | ,, | प्रकरणा: | ,, | प्रकरणम् |
| 8635 | 31 | ,, | above | ,, | last but one |
| 8646 | 22 | ,, | धन्य | ,, | धन्यै |
| 8667 | 21 | ,, | सज्जनात् | ,, | सज्जनान् |
| 8670 | 8 | ,, | कौशिकी | ,, | कैशिकी |
| 8686 | 13 | ,, | कलितनि(सुयो)शेषं | ,, | कालितशे(सुयो)षं |
| 8707 | 23 | ,, | क्षाणी | ,, | क्षोणी |
| 8752 | 16 | ,, | Ubhaya | ,, | Abhaya |

# CONTENTS.

## CLASS XI—RHETORIC AND POETICS.

## CLASS XI RHETORIC AND POETICS—*cont*



## CLASS XII—MUSIC AND DANCING.

CLASS XII—MUSIC AND DANCING—*cont.*



CLASS XIII—ŚILPAŚASTRA.

# A DESCRIPTIVE CATALOGUE
OF THE
# SANSKRIT MANUSCRIPTS
## VOLUME XXII

---

## CLASS XI.—RHETORIC AND POETICS.

---

### No. 12784. अलङ्कारकौमुदीव्याख्या.
### ALAṄKĀRAKAUMUDĪVYĀKHYĀ.

**Pages, 24.** Lines, 11 on a page.

Begins on fol. 338*b* of the MS. described under No. 12471.

Contains the seventh Kiraṇa.

A commentary on the Alaṅkārakaumudī which is a **work** on rhetoric. Neither the author's name of the original treatise nor that of the commentary is given in the work.

**Beginning:**

अथालंकारो द्विविधः--शब्दालंकारोऽर्थालंकारश्च । तत्र पूर्वोक्तोपमिति-मुखोऽलंकृतिगण इत्यत्रोपमितिप्रभृत्यर्थालंकारो मुख्यः । वक्रोक्त्यादिशब्दालं-कारो गौणः । अत आदौ गौणालंकारमेवाह—अथेत्यादिना । अभिधावृत्त्या एकेनार्थेन यद्वस्तु प्रोक्तं श्लेषकाकुरूपाभ्यां व्यञ्जनावृत्तिभ्यां प्रोक्तेनान्येनार्थेन तद्वस्तु अन्यथा क्रियते तत्र स्थले शब्दनिष्ठवक्रोक्त्यलंकारो ज्ञेयः । श्रीराधिका आह—हे श्याम त्वं कः । अभिधावृत्त्या प्रत्युत्तरमाह—हरिरिति ।

**End:**

सरोवरे यथा कमलं शोभते तथैव नभोरूपसरोवरे चन्द्रोऽपीत्यर्थः ॥

**Colophon:**

सप्तमकिरणः समाप्तः ॥

संवत् १८८८ लिखितं ब्राह्मणगोपालेन ॥

---

### No. 12785. अलङ्कारकौस्तुभः.
### ALAṄKĀRAKAUSTUBHAḤ.

**Substance, palm-leaf.** Size, $13\frac{1}{4} \times 1\frac{1}{4}$ inches. Pages, 70. **Lines,** 8 on a page. Character, Telugu. Condition, good. Appearance, new.

Complete.

Same work as that described under R. No. 369(*a*) of the Triennial Catalogue of MSS., Vol. I, Part I-B, wherein see for the beginning. By Vēṅkaṭācārya, son of Aṇṇayācārya of Tirumala Bukkapatṇam. He is also the author of the Acalātmajāpariṇayamu (vide R. No. 41 of the Triennial Catalogue of MSS., Vol. I, Part III, Telugu).

**End:**

अनुमानं यथा—

कुन्दबृन्दमकरन्दनन्दितामन्दतुन्दिलमिलिन्दसुन्दरम् ।
शौरिहारि वनमेतदङ्गने श्रूयते यदिह वेणुनिक्वणः ॥

एवमन्यदप्यूह्यमिति सिद्धम् ।

शब्दालङ्कृतिभिः षड्भिर्युक्ता अष्टोत्तरं शतम् ।
अर्थालङ्कृतयः प्रोक्ताः श्रीनिवास निशम्यताम् ॥

प्रज्ञावासुकिवेष्टिताखिलमनस्संक्षुब्धविद्यापयः-
पारावारसमुत्थितो गुणयुतोऽलङ्कारसत्कौस्तुभः ।
श्रीशैलाण्णयदीक्षितात्मजनुषा श्रीवेङ्कटार्येण स-
द्भक्त्या यः सुसमर्पितो विजयतां शेषाद्रिभूषामणेः ॥

षट्तन्त्रेषु स्वतन्त्रैः फणिपतिभणितिप्रौढमेधासनाथैः
श्रुत्यन्तात्यन्तिकश्रीकृतिपटुमतिभिः श्रीनिवासार्यवर्यैः ।
तर्कालङ्कारवागीश्वर इति यदिदं मे विशिष्य स्वनाम
प्रत्तं तत्तत्कटाक्षाद्विशदयितुमयं कौस्तुभोऽभून्निबद्धः ॥

**Colophon:**

श्रीमत्तिर्मलबुक्कपत्तनमहावंशाब्धिराकासुधाकरश्रीमदण्णयार्यदीक्षिततनयस्य तर्कालङ्कारवागीश्वरस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटाचार्यस्य कृतिषु अलंकार-कौस्तुभः समाप्तः ॥

No. **12786.** **अलङ्कारकौस्तुभः.**

ALAṄKĀRAKAUSTUBHAḤ.

Substance, paper. Size, 13¼ × 8⅜ inches. Pages, 46. Lines, 32 on a page. Character, Grantha. Condition, good. Appearance, new.

Begins on fol. 96*a*. The other works herein are Śṛṅgāratilaka 1*a*, Candrālōkaprakāśa-Śaradāgama 33*a*, Citramīmāṁsāvyākhyā 59*a*.

Complete.

Same work as the above.

---

No. **12787.** अलङ्कारकौस्तुभः.
ALAṄKĀRAKAUSTUBHAḤ.

Substance, palm-leaf. Size, $13\frac{3}{8} \times 1\frac{1}{2}$ inches. Pages, 89. Lines, 7 on a page. Character, Grantha. Condition, injured. Appearance, new.

Complete.

Same work as the above.

---

No. **12788.** अलङ्कारकौस्तुभः.
ALAṄKĀRAKAUSTUBHAḤ.

Substance, palm-leaf. Size, $18 \times 1\frac{1}{4}$ inches. Pages, 85. Lines, 6 on a page. Character, Grantha. Condition, fair. Appearance, old.

Complete.

Same work as the above.

---

No. **12789.** अलङ्कारकौस्तुभः.
ALAṄKĀRAKAUSTUBHAḤ.

Substance, palm-leaf. Size, 17 and $15\frac{1}{2} \times 1\frac{1}{2}$ inches Pages, 46. Lines, 7 on a page. Character, Grantha. Condition, slightly injured. Appearance, old.

Begins on fol. 7*a*. The other works herein are Kavikalpalatā 1*a* and 32*a*, Daśarūpaka 30*a*.

Breaks off in the Ślēṣālaṅkāra.

Same work as the above.

---

No. **12790.** अलङ्कारकौस्तुभः.
ALAṄKĀRAKAUSTUBHAḤ.

Substance, Śrītāla. Size, $15 \times 2$ inches Pages, 180. Lines, 8 on a page. Character, Grantha. Condition, fair. Appearance, old.

Complete.

Same text as that described under No. 31 of M. Seshagiri Sastri's Report, No. 2. By Kalyāṇa-Subrahmaṇyasūri. The author gives the characteristics of the different Alaṅkāras dealt with in the Candrālōka, and illustrates them by means of examples of his own composition. The last 12 leaves contain a list of addenda to the MS. work.

Foll. 91*a*—92*a* contain a Gadya in praise of King Rāmavarman of Vañci country in Travancore.

No. **12791.** अलङ्कारप्रकाशिका.

ALAṄKĀRAPRAKĀŚIKĀ.

Pages, 21. Lines, 8 on a page. *Written on one side of paper.*

Begins on fol. 124*a* of the MS. described under No. 10574.

Contains only the Śabdālaṅkāra.

This is a work on rhetoric treating of Śabdālaṅkāra and Arthālaṅkāra. The name of the author is not known.

**Beginning:**

मातापितृभ्यां जगतां नमो वामार्धजानये ।
सद्यो दक्षिणदृक्पातसङ्कुचद्वामदृष्टये ॥

अलङ्कारप्रकरणमारभ्यते। अलङ्क्रियते अनेन चारुत्वातिशयहेतुनेत्यलङ्कारः।

उपाकुर्वन् रसं सन्त(मङ्गद्वा)रेण संश्रिताः ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥

इति । (अङ्ग)द्वारेण रसाङ्गयोः शब्दार्थयोरतिशयाधानद्वारेण सन्तं विद्यमानं रसं संश्रिताः सम्यगाश्रिताः उपाकुर्वन् उपकारका भवन्ति स्म । ते अलङ्काराः । यथा(हारादयः)कण्ठादिकाङ्गसौन्दर्यातिशयाधानद्वारेण उपाकुर्वन् ।

शब्दार्थसंश्रयत्वेनालङ्कारा द्विविधा मताः । अलङ्काराणां शब्दार्थगत(त्वेन)-द्वैविध्यम् । तत्र शब्दगताः षडेव । अर्थगता बहुविधा भवन्ति ।

* * * *

शब्दार्थालंकारयोर्मध्ये शब्दस्यैवान्तरङ्गत्वादादौ शब्दालंकाराः सोदाहरणा निरूप्यन्ते ।

**End:**

अत्रादिवर्णस्य वृद्धेः अन्त्यवर्णनाशः । शम्भुं विना को वेत्ति शम्भुशब्दं विना न कोऽपि योजनां वेत्तीति चमत्कारः । शम्भुः । नाशम् । मेना

* * * *

रावणस्य कियद्रक्तं नूपुरं कुत्र धार्यते ।
आन्ध्रगीर्वाणभाषाभ्यामेकमेवोत्तरं वद ॥

पद्यम्,

भवित्री रम्भोरु त्रिदशवदनग्लानिरधुना
स मे रामः स्थाता न युधि पुरतो लक्ष्मणसखः ।
इयं यास्यत्युच्चैर्विपदमधुना वानरचमू-
र्लघिष्ठेदं षष्ठाक्षरपरविलोपात्पठ पुनः ॥

इति शब्दालङ्काराः ॥

No. 12792. अलङ्कारमुक्तावलिः.
ALAṄKĀRAMUKTĀVALIḤ.

Pages, 54. Lines, 12 on a page.

Begins on fol. 1*b* of the MS. described under No. 12532.

Complete.

A work on rhetoric: by Viśvēśvara, son of Lakṣmīdhara. He says that he wrote this work for the use of beginners after writing a more comprehensive treatise named Alaṅkārakaustubha.

**Beginning:**

सन्मूलप्रकृतिः प्रकाशितशतानन्दो दधानः क्षमां
कृष्णोचा(ऽद्या)पि सुमन्तुनैकगुरुताशाली न यत्पूज्यताम् ।
सद्वृत्तिं दधदात्मभूतनयतामारुन्धते यस्य ता-
माचार्यः प्रथमो गिरां विजयते विद्वान् स लक्ष्मीधरः ॥
नानापक्षविभावनकुतुकमलङ्कारकौस्तुभे कृत्वा ।
सुखबोधाय शिशूनां क्रियते मुक्तावलिस्तेषाम् ॥

तत्र प्रायेण सर्वालङ्काराणां सादृश्यपर्यवसायित्वेन प्राधान्यात् प्रथममुपमा व्याख्यायते । यत्रैकवाक्यवाच्यं सादृस्यं भिन्नयोरुपमा । चन्द्र इव मुखं मुखमिव चन्द्र इत्युपमेयोपमायामतिव्याप्तिवारणायैकेत्यादि । तत्र वाक्यद्वयसत्त्वान्न दोषः । व्यङ्ग्योपमावारणाय वाच्येति । चन्द्र इव चन्द्र इत्यनन्वयवारणाय भिन्नयोरिति । सा चेयमुपमा द्विविधा—पूर्णा लुप्ता च ।

**End:**

अष्टमो यथा—

अप्यादेर्जगतां नवो लवणिमा सीदन्ति गात्राणि किं
रज्यन्ते न हि मानसानि विषये प्रत्यभिरुद्धात्मनाम् ।
विग्वृत्तिं मनसः स्पृहां तरलितां लभ्येत वायं मया
प्रेयानित्यचलाधिराजदुहितुश्चिन्ता चिरं पातु वः ॥

इह जगदम्बिकायाः शिवदर्शने विस्मयश्रमतिनिर्वेदोत्कण्ठानां शबलत्वं कविनिष्ठगौरीविषयकभावस्याङ्गमिति सर्वं शिवम् ॥

हृद्यावधानतरलामवदातवृत्तां मुक्तावलीं गुणगणैर्ग्रथितामनर्घैः ।
कण्ठे निधाय विबुधा बहुधा वहन्तु शश्वत्सभाजनसभाजनभाजनत्वम् ॥

श्रीमन्महीं(महि)ततत्तदसीमभीमन्मूर्धन्यताकलनसङ्गतधन्यताकः ।
लक्ष्मीधरो यमुदसूत मुदं प्रसूतां विश्वेश्वरस्य कृतिरस्य चिरस्य लोके ॥

**Colophon :**

इत्यलङ्कारमुक्तावली समाप्ता ॥

Date of transcription :

संवत् १९०९.

---

No. **12793.** अलङ्कारमुक्तावलिः.
ALAṄKĀRAMUKTĀVALIḤ.

Substance, paper. Size, $8\frac{3}{4} \times 5\frac{1}{2}$ inches. Pages, 193. Lines, 10 on a page. Character, Dēvanāgarī. Condition, good. Appearance, new.

Begins on fol. 49*a*. The other work herein is Śṛṅgāradīpikā 1*a*.

Complete.

Same work as the above.

---

No. **12794.** अलङ्कारसङ्ग्रहः.
ALAṄKĀRASAṄGRAHAḤ.

Pages, 40. Lines, 6 on a page.

Begins on fol. 1*a* of the MS described under No. 12758.

A work on rhetoric and poetics: by Amṛtānandayōgin. The introductory stanzas give the scope of the work.

Contains one to five Paricchēdas, which treat of the following subjects:—

| | |
|---|---|
| वर्णगणविचारः. | नेतृभेदविचारः. |
| शब्दार्थनिर्णयः | अलङ्कारनिर्णयः. |
| रसनिर्णयः. | |

The author says that he wrote this work after having collected the required materials from various treatises and at the instance of King Manva Samudra, son of Bhaktibhūmipati who was a devotee of Śiva.

**Beginning :**

जगद्वैचित्र्यजननजागरूकपदद्वयम् ।
अनियोगरसाभिज्ञमाद्यं मिथुनमाश्रये ॥
समुल्लासरसाकारं तत्त्वकैरवकौमुदीम् ।
नमामि शारदां देवीं नामरूपाधिदेवताम् ॥

उद्दामफलदां गुर्वीमुर्वीमुदधिमेखलाम् ।
भक्तिभूमिपतिः शास्ति शिवपादाब्जषट्पदः ॥
तस्य पुत्रश्चा(गमवित् समुद्र)बिरुदाङ्कितः ।
सोमसूर्यकुलोत्तंसो महितो मन्वभूपतिः ॥
वक्ता दि(विद्व)त्सभामध्ये काव्यालापकथान्तरे ।
अपृच्छदमृतानन्दमादरेण कवीश्वरम् ॥
वर्णरूपं काव्यवृत्तिं रसान् भावाननन्तरान् ।
नेतृभेदानलङ्कारान् दोषानपि च तद्गुणान् ॥
नाट्यधर्मान् रूपकोपरूपकानां भिदा अपि ।
चाटुप्रबन्धभेदांश्च(विकीर्णा)स्तत्र तत्र तु ॥
संचित्यैकत्र कथय सौ(कर्या)य सतामिति ।
मया तत्प्रार्थितेनेत्थममृतानन्दयोगिना ॥
ग्रन्थान्तरोदितानर्थान् वाक्येनैव क्वचित्क्वचित् ।
(संचिन्त्य क्रियते सम्यक् सर्वालङ्कारसंङ्ग्रहः) ॥
अकारादिक्षकारान्ता वर्णास्तु पदतां गताः ।
पदानि द्विविधानि स्युः तिङ्सुबन्तविभेदतः ॥
सञ्चयास्ति(ङ्सुबन्तानां वाक्यान्याहुर्विपश्चितः) ।
तान्येव कविक्लृप्तानि सार्थानि सरसानि च ॥
सालङ्काराणि निर्दोषाण्याहुः सर्वे विपश्चितः ।
गद्यं पद्यं च मिश्रं च त्रिविधं काव्यमुच्यते ॥

**End:**

ऐतिह्यमिति विज्ञेयं प्रमाणं पण्डितैर्यथा ॥
यासि भीरु ननु तत्र निशीथे ध्वान्तरुद्धदशदिक्प्रतिभागे ।
वर्त्मनीह वटभूरुहवृक्षे(हि यक्षः) तिष्ठतीति न जना विचरन्ति ॥
नानाविधालंकृतिमच्छवर्णां कन्यामिवैनां कवितां वृणीष्व ।
अस्यां यशःसन्ततिवृद्धिरस्तु विवेकविद्याधरमन्वभूप ॥

**Colophon:**

इति श्रीअमृतानन्दयोगिप्रवरविरचिते अलंकारसंग्रहे अलंकारनिर्णयो नाम पञ्चमः परिच्छेदः ॥

No. **12795.** अलङ्कारसङ्ग्रहः.
ALAṄKĀRASAṄGRAHAḤ.

Substance, paper. Size, 13¼ × 8¼ inches. Pages, 2. Lines, 22 on a page. Character, Grantha. Condition, good. Appearance, new.

Begins on fol. 115*a*. The other works herein are Ēkāvalī 1*a*, Alaṅkārasarvasva 55*a*.

Complete.

An enumeration and classification of the various Alaṅkāras or figures of speech. The name of the author is not given.

**Beginning:**

पुनरुक्तवदाभासश्छेकानुप्रासवृत्त्यनुप्रासौ ।
यमकं लाटश्चित्रं षडिमे स्युः पौनरुक्त्येऽत्र ॥
भेदाभेदतुलावृत्तावुपमानन्वयक्रमात् ।
उपमेयोपमा तुर्यं स्मरणं च चतुष्टयम् ॥
रूपकं परिणामश्च संदेहो भ्रान्तिमानथ ।
उल्लेखापह्नुति(श्चैव) षड्भेदप्रधानके ॥

**End:**

भावस्य शान्तिरुदयः सिद्धिः शबलता क्रमात् ।
संसृष्टिः संकरस्त्रेधा इत्यलंकारसंग्रहः ॥
कठोरकुचमण्डलाकलितपादपङ्केरुहः
कराब्जधृततत्करां गिरिसुतामुपर्युद्धरन् ।
स्मिताञ्चितमुखाम्बुजः स्मितमुखं पिबन्नीक्षणैः
करोतु जयमङ्गलं कनकमञ्चशायी शिवः ॥

---

No. **12796.** अलङ्कारसर्वस्वम्.
ALAṄKĀRASARVASVAM.

Pages, 122. Lines, 22 on a page.

Begins on fol. 55*a* of the MS. described above.

Complete.

A work on rhetoric: by Maṅkhuka, a minister of the Kāśmīra king. The author gives at first the views of his predecessors, such as Bhāmaha, Udbhaṭa, Rudraṭa, Vāmana, etc. This work has been printed in the Kāvyamālā Series, wherein the author's name is given as Rājānaka Ruyyaka. Maṅkhuka is also the author of Śrīkaṇṭhacarita.

**Beginning:**

नमस्कृत्य परां वाचं देवीं त्रिविधविग्रहाम् ।
गुर्वलङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते ॥

इह हि भामहोद्भटप्रभृतयस्तावच्चिरंतनालङ्कारकाराः प्रतीयमानमर्थं वाच्योपस्कारितयालङ्कारपक्षे निक्षिप्तं मन्यन्ते । तथाहि पर्यायोक्ताप्रस्तुतप्रशंसासमासोक्त्याक्षेपव्याजस्तुत्युपमेयोपमानन्वयादौ वस्तुमात्रं गम्यमानं वाच्योपस्कारकत्वेन स्वसिद्धये पराक्षेपः परार्थे स्वसमर्पणमिति यथायोगं द्विविधया भङ्ग्या प्रतिपादितं तैः । रुद्रटेनापि भावालङ्कारो द्विधैवोक्तः । रूपकदीपकापह्नुतितुल्ययोगितादावुपमालङ्कारो वाच्योपस्कारित्वेनोक्तः । रसवत्प्रेयऊर्जस्विप्रभृतौ तु रसभावादिः वाच्यशोभाहेतुत्वेनोक्तः । उत्प्रेक्षा तु स्वयमेव प्रतीयमाना कथिता । तदित्थं त्रिविधमपि प्रतीयमानमलंकारतया ख्यापितमेव । वामनेन तु सादृश्यनिबन्धनाया लक्षणाया वक्रोक्त्यलङ्कारत्वं ब्रुवता कश्चित् ध्वनिभेदोऽलङ्कारतयोक्तः । केवलं गुणविशिष्टपदरचनात्मिका रीतिः काव्यात्मत्वेनोक्ता ।

**End:**

इदानीमुपसंहरति—

एवमेते शब्दार्थोभयालङ्काराः संक्षेपतः सूत्रिताः ।

एवमिति पूर्वोक्तप्रकारपरामर्शः । एत इति प्रक्रान्तस्वरूपानिर्देशः । सूत्रिताः अलङ्कारसूत्रैः सूचनरूपेण प्रतिपादिताः । तत्र तावच्छब्दालङ्कारा यमकादयः । अर्थालङ्कारा उपमादयः । उभयालङ्कारा लाटानुप्रासादयः । संसृष्टिसंकरप्रकारयोरपि कयोश्चिदलङ्कारात् लोकवदाश्रयाश्रयिभावश्च तत्तदलङ्कारत्वनिबन्धनम् । अन्वयव्यतिरेकौ तत्कार्यत्वे प्रयोजकौ न तु तदलङ्कारत्वे । प्रयोजकत्वे तु श्रौतोपमादेरपि शब्दालङ्कारत्वश्रवणा(प्रसङ्गा)त् । तस्मादाश्रयाश्रयिभावेनैव चिरन्तनमतानुसृष्टिः ॥

**Colophon:**

इति मङ्खुको वितेने काश्मीरक्षितिपसान्धिविग्रहिकः ।
सुखाविमुखालङ्कारं तदिदमलङ्कारसर्वस्वम् ॥
इत्यलङ्कारसर्वस्वं संपूर्णम् ॥

## No. 12797. अलङ्कारसर्वस्वम्.
## ALAṄKĀRASARVASVAM.

Substance, palm-leaf. Size, $18\frac{1}{8} \times 1\frac{3}{8}$ inches. Pages, 81. Lines, 7 on a page. Character, Telugu. Condition, slightly injured. Appearance, old.

Begins on fol. 1*a*. The other work herein is Alaṅkārasarvasvaṭīkā : Sañjīvinī 43*a*.

Complete.

Same work as the above.

---

## No. 12798. अलङ्कारसर्वस्वम्.
## ALAṄKĀRASARVASVAM.

Pages, 18. Lines, 7 on a page.

Begins on fol. 41*a* of the MS. described under No. 12406.

Incomplete.

A work on poetics and rhetoric. The author, whose name is not given, says that his teacher composed a work on Alaṅkāra in praise of and to the delight of King Gōpāladēva.

**Beginning:**

श्रीगोपालस्य हर्षायोपाध्यायैः कथितं मम ।
तदलंकारसर्वस्वं सन्तः कर्णोत्सवोऽस्य(स्तु) वः ॥
श्रीगोपालस्य देवस्य यशो भूषयितुं कृता ।
उपाध्यायकृतिः सेय . . . . . . . . . . ॥

प्रबन्धमहत्ता—

कवेरल्पापि वाग्वृत्तिर्विद्वत्कर्णावतंसति ।
नायको यदि वर्ण्येत लोकोत्तरगुणोत्तरः ॥
पूर्वशास्त्रानुसारेण कतिचित्कथिता मया ।
तस्य गोपालदेवस्य गुणोपादानगु . . . ॥

गुणा उच्यन्ते—

महाकुलीनतौज्ज्वल्यं महाभाग्यमुदारता ।
तेजस्विता विदग्धत्वं धार्मिकत्वादयो गुणाः ॥

**End:**

वर्ण्यमानाङ्कबिरुदवर्णनप्रचुरोज्ज्वला ।
वाक्याडम्बरसंयुक्ता सा मता बिरुदावली ॥

* * * *

**Colophon:**

इत्यलंकारसर्वस्वे काव्यप्रकरणं समाप्तम् ॥

अथ गुणप्रकरणमारभ्यते—शब्दार्थमयत्वात्काव्यस्य तदुपस्कारहेतूनां

* * * *

नूपुराङ्गदहारादिवदलंकरणं मतम् ।
मलयानिलचन्द्राद्यास्तटस्थाः परिकीर्तिताः ॥

No **12799.** अलङ्कारसर्वस्वव्याख्या—संजीविनी.

ALAṄKĀRASARVASVAVYĀKHYĀ: SAÑJĪVINĪ.

Substance, paper. Size, 13¼ × 8¼ inches. Pages, 184. Lines, 22 on a page. Character, Grantha. Condition, good. Appearance, new.

Complete.

The commentary on Maṅkhuka's Alaṅkārasarvasva described under No. 12796: by Śrīvidyācakravartin. It is called Sañjīvinī.

**Beginning:**

अकृत यदलंकृतीनां सर्वस्वं सन्धिविग्रही तस्य ।
संजीविनीति टीका श्रीविद्याचक्रवर्तिना क्रियते ॥

उदाहृतिविशेषोऽत्र यो यो ग्रन्थकृता कृतः ।
तदीयन्यायसंपन्नैः स्वपद्यैः पूरयामि तम् ॥

किं विस्तरेण बहुना टीकां संजीविनीमिमां कश्चित् ।
यद्यभ्यसूयति जडः स्वमेव पाण्डित्यमभ्यसूयति सः ॥

तत्र तावदधिकृतेष्टदेवतापुरस्कारेण प्रकरणप्रतिपाद्यमर्थं प्रतिजानीते—नमस्कृत्य परामिति । सर्वैव खल्वियं वाक् परा पश्यन्ती मध्यमा वैखरीति चतुर्भिः परिमीयते । तथाच श्रुतिः—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा[सु] त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचं मनुष्या वदन्ति ॥ इति ॥

**End:**

निगमयति—तस्मादाश्रयाश्रयीति । चिरन्तनेत्युक्तार्थे संवादसमुद्घाटनम् ॥

शब्दन्यासो विषमविषमो दुर्घटार्थव्यवस्था-
व्याप्तव्याप्तिप्रकटनपरन्यायचर्चो गभीरः ।
इत्थंभूमा रुचकवचसां विस्तरः . . .
. . . . . . . परिचितानेन संवाहनीयम् ॥

सूक्ष्मामव्याकुलामत्र शास्त्रवृत्त्युपबृंहिताम् ।
मीमांसामुपजीवन्तु कृतिनः काव्यतान्त्रिकाः ॥

काव्यप्रकाशेऽलङ्कारसर्वस्वे च विपश्चिताम् ।
अत्यादरो जगत्यस्मिन् व्याख्यातमुभयं ततः ॥

**Colophon:**

इति अलङ्कारप्रस्थानपरमाचार्यकाव्यमीमांसाप्रभाकरसर्वज्ञमहाकविश्रीविद्याचक्रवर्तिविरचितायां सञ्जीविन्यामलङ्कारसर्वस्वटीकायामर्थालङ्कारप्रकरणं समाप्तम् ॥

No. **12800.** अलङ्कारसर्वस्वव्याख्या—संजीविनी.

ALAṄKĀRASARVASVAVYĀKHYĀ : SAÑJĪVINĪ.

Pages, 213. Lines, 7 on a page.

Begins on fol. 43*a* of the MS. described under No. 12797.

Complete.

Same work as the above.

No. **12801.** एकावलिः.

ĒKĀVALIḤ.

Pages, 105. Lines, 28 on a page.

Begins on fol. 1*a* of the MS. described under No. 12795.

Complete.

A rhetorical treatise in eight Unmēṣas: by Mahēśvara alias Vidyādhara. The work has been printed in the Bombay Sanskrit Series in the printing of which edition this MS. was utilised.

The subjects dealt in the work are given below :—

१. ध्वनिव्यवस्थापनम्.
२. शब्दार्थनिरूपणम्.
३. ध्वनिभेदनिरूपणम्.
४. गुणीभूतव्यङ्ग्यनिरूपणम्.
५. गुणनिरूपणम्.
६. दोषनिरूपणम्.
७. शब्दालङ्कारनिरूपणम्.
८. अर्थालङ्कारनिरूपणम्.

**Beginning:**

प्रालेयाचलकन्यकाकुचतटीपत्रावलीशिल्पिनः
प्रेङ्खत्फालविलोचनानलशिखानिष्पीतचेतोभुवः ।
देवस्येन्दुविभूषणस्य रुचिरं पादारविन्दद्वयं
युष्मान् पातु सुरासुरेश्वरशिरोरत्नांशुकिञ्जल्कितम् ॥

ननु नमस्कारात्मकं यत्कर्म तत्किं शास्त्रस्याङ्गमिति प्रथमत एव क्रियते प्रधानमिति वा? अङ्गतया अङ्गीक्रियमाणमपि सन्निपत्योपकारकत्वेनेदमभिमतमाराादुपकारकत्वेन वा? नादिमः पक्षः द्वाराभावात्। शास्त्रप्रतिबन्धकदुरितोच्छेद एवास्य द्वारमिति चेन्न ।

**End:**

प्रतिभटकान्ताकुचतटमकरीलुण्टाकचापटङ्कारः ।
वीरनृसिंह इवाजौ वीरनृसिंहश्चिरञ्जयति ॥

अत्र लाटानुप्रासेन सहानन्वयस्य एकवाचकानुप्रवेशेन सङ्करः ॥

**Colophon:**

इति श्रीमतो महामहीश्वरस्य कवेर्विद्याधरस्य कृतावेकावलीनामन्यलङ्कार शास्त्रेऽर्थालङ्कारनिरूपणं नामाष्टमोन्मेषः । एकावली संपूर्णा ॥

एकामेकावलीमेव कण्ठे धत्ते कवीश्वरः ।
आः किमन्यैरलङ्कारैरसारैर्भूरिसूरि(भारदायि)भिः ॥

---

## No. 12802. कविकण्ठपाशः.
## KAVIKAṆṬHAPĀŚAḤ.

Pages, 9. Lines, 4 on a page.

Begins on fol. 133*a* of the MS. described under No 1701.

Complete.

A treatise on the characteristics of a poet's personal appearance and qualities, on the effects of the initial words of a poem, on the day of commencement of a poetical composition, etc. It is stated to have been based on Piṅgala's work.

**Beginning:**

यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शताः ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥

अथ भुवनेषु पुरुषाणां शुभाशुभफलं गिरां वक्ष्ये ।
वर्णगणजातिभेदैः पिङ्गलमुनिनोक्तमवलोक्य ॥

जगदुदयसिद्धिविलये महिताः खलु लोकविख्याताः ।
शापानुग्रहकुशला देवा ऋषयो नरा ये वै ॥

तेषामीश्वरसदृशां काव्यग्रथनेन लक्षणं यस्मात् ।

**End:**

वीरभद्रो वासुदेवोऽप्यश्विनौ भद्रकालिका ।
कालरुद्रः समीरश्च दहनोऽमरवल्लभः ॥

वरुणः कमला सूर्यो भारतीशान एव च ।
भूतानि नरसिंहश्च देवाः प्रोक्ता महर्षिभिः ॥

**Colophon:**

इति श्रीपिङ्गलोक्तकविकण्टपाशः समाप्तः ॥

---

No. **12803.** कविकण्ठपाशः.

KAVIKAṆṬHAPĀŚAḤ

Pages, 10. Lines, 6 on a page.

Begins on fol. 18*a* of the MS. described under No. 1789.

Complete.

Same work as the above.

---

No. **12804.** कविकल्पलता.

KAVIKALPALATĀ.

Pages, 70. Lines, 24 on a page.

Begins on fol. 92*a* of the MS. described under No. 859.

Complete in four Stabakas.

A work on poetics: by Dēvēśvarakavi, son of Vāgbhaṭa.

See M. Seshagiri Sastri's Report No. 2, pages 80 and 224, for detailed description and extracts.

---

No. **12805.** कविकल्पलता.

KAVIKALPALATĀ.

Substance, palm-leaf (Śrītāla). Size, $14\frac{1}{4} \times 1\frac{3}{4}$ inches. Pages, 63. Lines, 13 on a page. Character, Grantha. Condition, good. Appearance, old.

Complete.

Same work as the above.

The former owner of the MS. is stated to be Tirumalai Caturvēdi Śatakratu Pandit Vēṅkaṭācār of Nāvalpākam.

---

No. **12806.** कविकल्पलता.

KAVIKALPALATĀ.

Pages, 49. Lines, 8 on a page.

Begins on foll. 1*a* and 32*a* of the MS. described under No. 12789.

Contains the first Stabaka incomplete and in duplicate and the portion from the second Kusuma to the end of the second Stabaka.

Same work as the above.

## No. 12807. कविकल्पलता.
## KAVIKALPALATĀ.

Substance, palm-leaf. Size, $17\frac{5}{8} \times 1\frac{1}{4}$ inches. Pages, 94. Lines, 5 on a page. Character, Telugu. Condition, good. Appearance, old.

Contains from the first Kusuma of the first Stabaka to the end of the third Kusuma of the fourth Stabaka.

Same work as the above.

---

## No. 12808. कविसमयकल्लोलः.
## KAVISAMAYAKALLŌLAḤ.

**Pages**, 65. Lines, 19 on a page.

Begins on fol. 39*a* of the MS. described under No. 12753.

Complete.

A work on poetics and rhetoric by Anantārya, son of Śiṅgarācārya. The author gives quotations from various works, such as Kāvyaprakāśa, Nañjarājayaśōbhūṣaṇa, Pratāparudriya, etc. The author has written another work named Kṛṣṇarājajayaḍiṇḍima.

**Beginning:**

भद्रोल्लासाय भूयाद्विनमदमरराड्दिव्यकोटीरकोटी-
रत्नाग्र्यप्रत्नमुक्तामणिगणविसरत्कान्तिकिञ्जल्कजुष्टम् ।
पादाब्जं श्राव्यनव्येतरभणितिसतीदिव्यसीमन्तसीमा
सन्धार्यं श्रीपतेः श्रीयदुशिखरिशिखारत्नदीपस्य विष्णोः ॥
चिरन्तनसरस्वतीचिकुरमल्लिकातल्लज-
प्रफुल्लनवमञ्जरीपरिगलन्मधूलीझरी ।
कला कलयतां मुदं कमलनेत्रवक्षस्थली-
कषोपलतटीकनत्कनकरेखिका काचन ॥
एधतां शिङ्गराचार्यगुरुर्यत्कीर्तिचन्द्रमाः ।
क्षीराब्धिशालिनो विष्णोः नाभीपद्मं न्यमीलयत् ॥
तत्पुत्रश्चित्रकृतिश्चतुरोऽनन्तार्यकोविदः कुतुकी ।
चित्रे काव्ये धीमांश्चक्रे कविसमयकल्लोलम् ॥
पूर्वार्यसूर्यालोकेभ्यो मद्वचस्त्रसरेणवः ।
प्रसिध्यन्त्यत एवैतान् पण्डिता द्रष्टुमर्हथ ॥
प्राचीनसूरिवचनव्रजसन्नता मे
वाणी विशेषविधुरापि धिनोति धीरान् ।

चन्द्राश्रयोज्ज्वलकलङ्कमषीव यद्वा
चन्द्रानना नयनकज्जलकालिकेव ॥

इह किल काव्यं दृष्टादृष्टपुरुषार्थसाधनतया सर्वेषां पुरुषाणामुपादेयमिति तावत्सिद्धम् । तदुक्तं काव्यप्रकाशे—काव्यं यशसे . . पदेशयुजे ॥ इति ।

प्रतिपादितं च धर्मसूरिणा—

विश्वोल्लङ्घनजाङ्घिकां वितनुते कीर्तिं विधत्ते श्रियं
हेलालङ्घितयक्षराजविभवां चिन्ताकरं हन्त्यघम् ।
दुग्धे स्वादुतरान् रसान्वितरति स्फारं कलाकौशलं
काव्यं निर्वृतिमावहत्यपि परिस्पन्दावहं चेतसः ॥ इति ।

अत्र काव्यस्य कीर्तनद्वारा स्वर्गादिरपि फलं बोध्यम् ।

* * * *

काव्यज्ञानां गुरूणां शिक्षया पुनःपुनः प्रवृत्तिरभ्यासः । तदुक्तम्—

गुरूणामन्तिके नित्यं काव्ये यो रचनादरः ।
अभ्यासो भण्यते सोऽयमलङ्कारेषु कोविदैः ॥ इति ।

प्रथमं सुलभच्छन्दसा लोकदृष्टव्यापारैः कार्यः । यथा—

विशालाक्षि निशा लेपं करोत्यङ्गे मनोहरे ।
वयस्य पश्य वापीयं प्रसन्नसलिलान्तरा ॥
संभावयात्र रम्भोरुमम्भोवहनसत्वराम् ।
अत्रायं ब्राह्मणः स्नाति मित्रालोकय चक्षुषा ॥
अयं माणवको वेदमधीते गुरुसन्निधौ ।
छात्रोऽयं शास्त्रपठनं तनुते पश्य भो सखे ॥

* * * *

मदीये कृष्णराजजयडिण्डिमे—

कृष्णनृपालकृपाणीचपलायां पाणिसरणिचपलायाम् ।
अरिवनितानयनपथाद्दृष्टिर्जज्ञे चतुर्दिक्षु ॥

**End:**

वर्ण्यानां दिगियं प्रोक्ता यथालङ्कारशास्त्रकम् ।
वर्णनाकुशलैश्चिन्त्यमनेकविधमस्ति तत् ॥
उक्तवर्ण्यैरुपेतं यत् तन्महाकाव्यमिष्यते ।
कैश्चिद्वर्ण्यैर्न्यूनमिति महाकाव्यमिति स्मृतम् ॥

वर्ण्यान्युक्तानि काव्यस्य शरीरं तु प्रदृश्यते ।
शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावलिः ॥
गद्यं पद्यं च मिश्रं च तत्रिधैव व्यवस्थितम् ।
विस्तरोऽन्यत्र द्रष्टव्यः संक्षेपस्त्विह कथ्यते ॥
पद्यं पादचतुष्टयं परिमितं काव्यं तु तत्संहतिः
तत्कृत्ताखिलवर्णना(?) यदि महाकाव्यं तयोदीर्यते ।
गद्यं हृद्यमपादबन्धमुभयोपेता तु चम्पू मुदे
सा स्याद्यौवनबाल्यमेलनवती कान्तेव यूनः कवेः ॥

**Colophon:**

इति कविसमयकल्लोलः समाप्तः ॥

---

No. **12809.** काव्यदर्पणः.
KĀVYADARPAṆAḤ.

Pages, 130. Lines, 12 on a page.

Begins on fol. 1*a* of the MS. described under No. 11473.

Contains the first and the tenth Ullāsas complete.

Same work as that described under R. No. 191 of the Triennial Catalogue, Vol. I, Part I-A. By Rājacūḍāmaṇidīkṣita, for whose genealogy see his other work, Ānandarāghava, (vide No. 12495). The author has written a good number of works, the names of which will be found in the extract from the end given below. The author is said to have had two brothers by his step-mother, viz., Kēśavadīksita and Śeṣādriśēkharadīkṣita.

**Beginning:**

अथावसरप्राप्तमर्थालङ्कारनिरूपणं प्रतिजानीते—

अथार्थालङ्कृतीः काश्चिदुपमाद्याः प्रचक्ष्महे ॥

लोके हि सूरिभिरद्यापि कल्प्यमानतयालङ्काराणाम(णां)सामस्त्येन कथनासम्भवात् काश्चिदित्युक्तम् । उपमाया एवोक्तिभेदेनानेकालङ्कारात्मना परिणम्यमानतया प्राधान्यादुपमाद्या इत्युक्तम् ।

**End:**

तदुक्तं दण्डिना—

न लिङ्गवचने भिन्ने न हीनाधिक[ग]तो(ते) अपि ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ इति ।

तस्मात् सर्वत्र सहृदयहृदयानुद्वेगकरा दोषा न परिहरणीया इति सर्वं निरवद्यम् ॥

अधीत्य निखिल शास्त्रमग्रजादीश्वरेष्टिनः ।
विदुषां प्रीतये येन वा . . . . . . ॥
यत्ता(त्वं)विनैव विहितो येन तन्त्रशिखामणिः ।
नव्या सङ्कर्षकाण्डस्य न्यायमुक्तावली तथा ॥
व्याकृता याजुषी शाखा तथोपनिषदोऽखिलाः ।
प्रणीता चाग्निहोत्रादेः प्रायश्चित्तप्रदीपिका ।
न्यायचूडामणिर्नाम्ना न्यायजालोपबृंहिता ॥
रुचिदत्तस्य च व्याख्या रुचिरा येन निर्मिता ।
मणिदर्पणनामानं महितं वाङ्मुखं मणेः ॥
खण्डत्रयस्य दुर्वादिखण्डनाय व्यधात्तु यः ।
येन शृङ्गारसर्वस्वनामा भाणोऽप्यभण्यत ॥
यश्चैकाह्ना भोजचम्पोर्युद्धकाण्डमपूरयत् ।
येन भारतचम्पुश्च वृत्ततारावली तथा ॥
विहिते शङ्कराचार्यतारावल्याः सहोदरे ।
सर्वतन्त्रस्वतन्त्रस्य श्रीनिवासमखीशितुः ।
कर्तुर्विश्वजितो येन तातस्य यमिता कथा ॥
रघुवीरस्य कृष्णस्य वासवानां च यः कथा(म्) ।
प्रत्यक्षरश्लेषमयैः पद्यैर्हृद्यैरवर्णयत् ॥
यमिता मञ्जुभाषिण्या येनास्ती(न सी)तापतेः कथा ॥
शङ्कराभ्युदयाभिख्यं काव्यं येनैव निर्मितम् ॥
कंसकाव्यमिकंस्वधं(सध्वंसाभिधं) रुक्मिण्युद्वाहमपि यो व्यधात् ।
येनोदिता कमलिनीकलहंसाख्यनाटिका ।
आनन्दराघवं नाम नाटकं च प्रपञ्चितम् ॥
येनाप्यतान्यलङ्का(र)चूडामण्य(भि)धा कृतिः ।
तथा वृत्तिविवेकेन विचित्रा चित्रमञ्जरी ॥

तेन व्यतानि श्रीराजचूडामणिमखीन्दुना ।
काव्यदर्पणनामासौ प्रबन्धो विदुषां मुदे ॥

**Colophon:**

इति श्रीमद्दन्तिद्योतिदिवाप्रदीपाङ्कविश्वामित्रवंशमुक्ताफलाद्वैतविद्याचार्यसर्व-
तन्त्रस्वतन्त्रप्रतिदिनप्रबन्धपरमेश्वरषड्भाषासार्वभौ(म)साग्निचित्यविश्वजिदतिरात्र-
याजिश्रीकृष्णभट्टपौत्रलक्ष्मभिवस्वामिभट्टपुत्रश्रीसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षि-
ततनयस्य कामाक्षीगर्भसम्भवस्य श्रीमदर्चना(र्धनारी)श्वरदीक्षितगुरुचरणसहज-
तालब्धविद्यावैशद्य(स्य)श्रीकेशवदीक्षितश्रीशेषाद्रिशेखरदीक्षितयोर्वैमात्रेयस्य श्री-
राजचूडामणिदीक्षितस्य कृतिषु काव्यदर्पणे दशमोल्लासः ॥

सम्पूर्णश्चायं काव्यदर्पणाख्यः प्रबन्धः ॥

---

## No. 12810. काव्यदर्पणः.
## KĀVYADARPAṆAḤ.

Substance, palm-leaf. Size, $15\frac{1}{4} \times 1\frac{1}{2}$ inches. Pages, 412. Lines, 10 on a page. Chaiacter, Grantha. Condition, injured. Appearance, old.

Contains one to nine Ullāsas.

Same work as the above.

The scribe adds—

श्रीमत्पल्लकुलोत्पन्नेन रामस्वामिशास्त्रिणा ।
क्रयक्रीतमिदं काव्यदर्पणाभिधपुस्तकम् ॥

---

## No. 12811. काव्यदर्पणः.
## KĀVYADARPAṆAḤ.

Substance, palm-leaf. Size, $15\frac{5}{8} \times 1\frac{1}{2}$ inches. Pages, 150. Lines, 9 on a page. Character, Grantha. Condition, good. Appearance, old.

Contains the fourth Ullāsa complete and the fifth incomplete.

Same work as the above.

---

## No. 12812. काव्यदर्पणः.
## KĀVYADARPAṆAḤ.

Pages, 68. Lines, 25 on a page.

Begins on fol. 132*a* of the MS. described under No. 1663.

Contains Ullāsas one (wants beginning) and two incomplete.

Same work as the above.

## No. 12813. काव्यदर्पणः.

## KĀVYADARPAṆAḤ.

Substance, palm-leaf. Size, $16\frac{3}{4} \times 1\frac{5}{8}$ inches. Pages, 288. Lines, 9 on a page. Character, Grantha. Condition, injured. Appearance, old.

Contains the Ullāsas five (wante beginning), six, seven, eight and nine complete.

Same work as the above.

The scribe adds—

चित्रभानुशरद्यर्के तौलिके शुक्लपक्षतौ ।
नारायणो नवोल्लासानलिखत्काव्यदर्पणे ।

अष्टौ दिशः सुरभयन्निजसूक्तिसूनैरष्टाङ्गयोगदृढचित्तविभावितात्मा ।
अष्टाभिरप्यनिशमात्मगुणैर्विशिष्टश्शिष्टाग्रणीर्जयति वेङ्कटयष्टृवर्यः ॥

---

## No. 12814. काव्यदर्पणः.

## KĀVYADARPAṆAḤ.

Substance, palm-leaf. Size, $15\frac{3}{8} \times 1\frac{3}{8}$ inches. Pages, 216. Lines, 7 on a page. Character, Telugu. Condition, injured. Appearance, old.

Contains the Ullāsas three to six complete and the seventh incomplete.

Same work as the above.

---

## No. 12815. काव्यदीपिका.

## KĀVYADĪPIKĀ.

Substance, palm-leaf. Size, $12 \times 1\frac{1}{2}$ inches. Pages, 43. Lines, 7 on a page. Character, Grantha. Condition, good. Appearance, new.

Incomplete.

A treatise on poetics intended for the beginners. The author, whose name is not given, mentions the views of Mammaṭa and Daṇḍin.

**Beginning :**

मातरं हृदये ध्यात्वा विशदाम्बुजवासिनीम् ।
बालानां सुखबोधाय क्रियते काव्यदीपिका ॥

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥

मम्मटः—काव्यं हि पाठादिसमनन्तरमेवानिर्वचनीयविलक्षणानन्दाय कालिदासादीनामिव यशस्संपत्तये श्रीहर्षादेर्धावकादीनामिव धनाधिगमाय लोकाचारादिपरिज्ञानाय सुधामयेन उपदेशवचनेन रामादिवत् प्रवर्तितव्यं न रावणादिवदिति सत्पथप्रवर्तनाय साधुविगर्हितवर्त्मनिवर्तनाय तत्तद्भाषासु व्युत्पत्ति

* * * * *

प्रथमतः काव्यस्य लक्षणमाह—

कथ्यते काव्यमिष्टार्थव्यवच्छिन्ना पदावली ।

दण्डी—इष्टा अलौकिकचमत्कारित्वेन सहृदयमनोरमाः अर्थाः, तैः व्यवच्छिन्ना विलक्षणीकृता पदावली पदसमूहः काव्यम् ।

**End:**

विस्मये हर्षे च यथा—

दृष्ट्वा स्फीतोऽभवदलिरसौ लेख्यपद्मं विशालं
चित्रं चित्रं किमिति किमिति व्याहरन् निष्पपात ।
नास्मिन् गन्धो न च मधुकरो नास्ति तत्सौकुमार्यं
घूर्णन् मूर्ध्ना स्तननतशिरा व्रीडया निर्जगाम ॥

विषादे यथा—

रात्री गमिष्यति भविष्यति च प्रभातं भास्वानुदेष्यति हसिष्यति पद्मजालम् ।
इत्थं विचिन्तयति कोशगते द्विरेफे हा हन्त हन्त नलिनीं गज उज्जहार ॥

न्यूनपदता यथा—

तथाभूतां दृष्ट्वा इत्यादौ पूर्वमुक्ते । अत्र.

---

No. **12816.** काव्यप्रकाशः.

KĀVYAPRAKĀŚAḤ.

Substance, paper. Size, 11½ × 7⅜ inches. Pages, 175. Lines, 10 on a page. Character, Telugu. Condition, slightly injured. Appearance, new.

Complete in ten Ullāsas.

Written on one side of paper.

A well-known work in poetics and rhetoric: by Mammaṭa Bhaṭṭa. This work has been repeatedly printed.

Date of transcription—21st April 1831. Name of the scribes—Mayilavarapu Śeṣayya and Vāraṇāśi Rāmasvāmi.

**Beginning:**

ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत्परामृशति—

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥

नियतिशक्त्या नियतिरूपा सुखदुःखमोहस्वभावा परमाण्वाद्युपादानकर्मादि-सहकारिकारणपरतन्त्रा षड्रसा । न(च)ह्यैव तैः ब्रह्मणो निर्मितिः निर्माणम् एतद्विलक्षणा तु कविवाङ्निर्मितिः । अत एव जयति जयत्यर्थेन(च) नमस्कार आक्षिप्यत इति तां प्रत्यस्मि प्रणत इति लभ्यते ।

**End:**

अत्राचेतनस्य प्रभोरप्रस्तुत(विशिष्ट)सामान्यद्वारेणाभिव्यक्तेः अयुक्तमेव पुनः कथनम् । तदेतेऽलङ्कारदोषा यथासंभविनोऽन्येऽप्येवंजातीयाः पूर्वोक्तयैव दोषजात्यान्तर्भाविता न पृथक्प्रतिपादनमर्हन्तीति संपूर्णमिदं काव्यलक्षणम् ॥

**Colophon:**

इति काव्यप्रकाशेऽर्थालङ्कारनिर्णयो नाम दशम उल्लासः ॥

---

No. **12817.** काव्यप्रकाशः.

KĀVYAPRAKĀŚAḤ.

Substance, paper. Size, $8\frac{1}{4} \times 6\frac{1}{2}$ inches. Pages, 171. Lines, 19 on a page. Character, Telugu. Condition, fair. Appearance, old.

Complete.

Same work as the above.

---

No. **12818.** काव्यप्रकाशः.

KĀVYAPRAKĀŚAḤ.

Substance, palm-leaf. Size, $18 \times 1\frac{1}{2}$ inches. Pages, 172. Lines, 7 on a page. Character, Telugu. Condition, slightly injured. Appearance, not fresh.

Complete.

Same work as the above.

Date—Sunday, the 30th of Āśvayuja Bahula in the Nala year. Name of scribe—Vīranna.

---

No. **12819.** काव्यप्रकाशः—प्रदीपप्रभासहितः.

KĀVYAPRAKĀŚAḤ WITH PRADĪPA AND PRABHĀ.

Substance, paper. Size, $12\frac{3}{8} \times 6$ inches. Pages, 326. Lines, 15 on a page. Character, Dēvanāgarī. Condition, good. Appearance, old.

Complete in ten Ullāsas.

The text by Mammaṭa is the same as the above. It is followed by a commentary, named Pradīpa, by Gōvindakavi, first son of Sōnamma and

Kēśava and consanguine brother of Rucikarakavi, which commentary is here again commented upon under the name Prabhā by Tatsat Vaidyanātha, son of Rāmabhaṭṭa and grandson of Viṭṭhalasūri. Gōvinda, the commentator, bewails the death of Śrīharṣa.

**Beginning** of Prabhā :

यः सर्वदैवतगणेषु महानुपेन्द्रब्रह्मादिभिः सततपूजितपादपद्मः ।
स स्वर्धुनीविमलवारितरङ्गभङ्गैरस्माकमाशु शमयत्वशुभं महेशः ॥
गुरुपादसरोजानि प्रणम्य च गजाननम् ।
काव्यप्रदीपसद्व्याख्यां प्रभाख्यां वितनोम्यहम् ॥

प्रेक्षावत्प्रवृत्तये स्वपित्रादिनामपूर्वकं मङ्गलमाचरन्नेवाभिधेयं दर्शयति— सोनोदेव्या इति । रुचिकरकविः सापत्नभ्रातेति ज्ञेयम्; अन्यथा प्रथमतनयः कनीयानिति च न सङ्गच्छते; तस्माद्वैमात्रेयः रुचिकरकविः अयं तु स्वमातुर्ज्येष्ठ एवेति ज्ञेयम् ।

* * * *

**Beginning** of Pradīpa :

सोनोदेव्याः प्रथमतनयः केशवस्यात्मजन्मा
श्रीगोविन्दो रुचिकरकवेः स्नेहपात्रं कनीयान् ।
श्रीमन्नारायणचरणयोः सम्यगाधाय चित्तं
नत्वा सारस्वतमपि महः काव्यतत्त्वं व्यनक्ति ॥

वचनसन्दर्भविशेषरूपस्य ग्रन्थस्य प्रारिप्सितत्वेन स्तोतुमुचितायाः सेव्यमानायाश्च वाग्देव्या आस्पदभूतां कविभारतीं तदभिन्नत्वेनाध्यवसितां प्रारिप्सितप्रतिबन्धकदुरितशान्तये ग्रन्थकृत्संस्तौति ।

नियम्यन्ते सौरभादयो धर्मा अनेनेति नियतिरसाधारणः ।

* * * *

**Beginning** of Kāvyaprakāśa :

ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत्परामृशति—
नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥

**End** of Kāvyaprakāśa :

न पृथक्प्रतिपादनमर्हन्तीति कल्याणमास्ताम् ॥

**Colophon :**

सम्पूर्णं काव्यलक्षणम् ॥

**End** of Kāvyapradīpa :

ज्येष्ठे सर्वगुणैः कनीयसि वयोमात्रेण पात्रे धियां
गात्रेण स्मरगर्वखर्वनपरे निष्ठाप्रतिष्ठाश्रये ।
श्रीहर्षे त्रिदिवं गते मयि मनोहीने च कः शोधये-
दत्राशुद्धमहो महत्तु विधिना भारोऽयमारोपितः ॥
परिशीलयन्तु सन्तो मनसा परितोषशीतेन ।
इममद्भुतं प्रदीपं प्रकाशमपि यः प्रकाशयते ॥
दीपिकाद्वितयं मन्ये प्रदीपद्वितयं स्तुतौ ।
स्वमतौ सम्यगुत्पाद्य गोविन्दः शर्म विन्दति ॥

**Colophon :**

इति श्रीमहामहोपाध्यायश्रीगोविन्दविरचिते काव्यप्रदीपे अर्थालङ्कारनिर्णयो नाम दशम उल्लासः समाप्तः ॥

**End** of Prabhā :

उपसंहरति सदेत इति । प्रोक्तजात्यन्तर्भाविता उक्तदोषसामान्यधर्मातिक्रान्ताः । एवं च पृथक् प्रतिपादने पुनरुक्ततादोषाः तदभावो गुण एवेति तात्पर्यम् ॥

काव्यप्रकाशगम्भीरभावबोधो न चान्यतः ।
इति प्रदीपगम्भीरभावार्थद्योतनं कृतम् ॥
अनेन प्रीयतां देवो नृसिंहो रमया युतः ।
कुलदैवतमस्माकं सर्वभूतात्मना स्थितः ॥

**Colophon :**

इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सदुपाख्यश्रीविट्ठलसूरिसूनुरामभट्टात्मजवैद्यनाथविरचितायां प्रदीपव्याख्यायां प्रभाख्यायां दशम उल्लासः ॥

---

No. **12820.** काव्यप्रकाशव्याख्या.

KĀVYAPRAKĀŚAVYĀKHYĀ.

Substance, paper. Size, $12\frac{1}{8} \times 5$ inches. Pages, 174. Lines, 12 on a page. Character, Dēvanāgarī. Condition, slightly injured. Appearance, new.

Contains Ullāsas four to ten complete.

This commentary on the Kāvyaprakāśa was composed by Rājānanda.

**Beginning :**

गणपतिपदयुगमध्यानधूतान्तरायो विकसितगुरुवक्त्रप्राप्तसत्संप्रदायः ।
रसविवरणहेतुः साधुकाव्यप्रकाशे विभवति शितिकण्ठप्रीतयेऽयं प्रयत्नः ॥

काव्यलक्षणे शब्दार्थौ विशेष्यौ । दोषाभावादयो विशेषणानि । तदत्र विशेष्ये निरूप्य(पि)ते विशेषणनिरूपणं प्राप्तावसरमित्यालोच्याह---यद्यपीत्यादि । साक्षात्संबन्धेन रसोऽत्र धर्मी व्यङ्ग्यव्यञ्जकभावेन तु काव्यम् । विवक्षितवाच्याद्यनेकविधं काव्यं रसमेवोपकरोति इति प्राधान्येन रसस्यैव धर्म(र्मि)त्वमतो धर्मिणि रसे प्रदर्शिते रसनिष्ठानां धर्माणां क्वचित्कस्यचिद्धेयत्वम् ।

**End :**

एषामलङ्कारदोषाणां सत्यपि पूर्वोक्तदोषेभ्यः कस्मिंश्चिद्विशेषलेशे नैतावता पृथग्लक्षणीयाः । किन्तु तत्तद्दोषसामान्यलक्षणसंग्रहेणैवैषामपि सिद्धिरिति शुभम् ॥

**Colophon :**

दशमोल्लासः संपूर्णः ॥
श्रीराजानन्दकृतिः काव्यप्रकाशटीका समाप्ता ॥

---

No. **12821**. **काव्यप्रकाशव्याख्या.**

KĀVYAPRAKĀŚAVYĀKHYĀ.

Substance, paper. Size, 11 × $8\frac{7}{8}$ inches. Pages, 209. Lines, 20 on a page. Character, Dēvanāgarī. Condition, good. Appearance, new. Complete.

The author of this commentary on the Kāvyaprakāśa is **Yajñēśvara** who is said to have performed sacrifices.

**Beginning :**

श्रीणामुदारः श्रीकान्तः श्रियं दिशतु मे प्रभुः ।
यस्याहुरीक्षणमिदं विश्वं नैगमसूक्तयः ॥
उपास्य विदुषो वृद्धान् यज्वा यज्ञेश्वराह्वयः ।
व्याख्यां काव्यप्रकाशस्य विदधाति यथामति ॥

ग्रन्थारम्भ इत्यादिना सदाचारप्रमाणकेष्टदेवतानमस्कारः कारिकार्थ इति दर्शयति । ग्रन्थः प्रारभ्यमाणं प्रकरणम् । ग्रन्थग्रहणं सरस्वत्याः समुचितदेवतात्वद्योतनाय । समुचितेति, अधिकृतेत्यर्थः । भारत्याश्चाधिकृतत्वं तत्प्रसादैकलभ्यस्य काव्यस्यात्राभिधेयत्वात्, अभिधायकस्य प्रकरणस्यापि वाङ्मयरूपत्वात् । परामृशति अनुसन्दधाति । तत्र स्वाभिलषितानुरूपं सरस्वत्या रूपमाविर्भावयति ।

* * * *

अत्र च श्लोके सर्वंवन्द्यत्वादिकं वस्तुव्यतिरेकोऽलङ्कारोऽतिलोकपदार्थविभाववि‍स्मयः साङ्गो रतिभावो व्यज्यते । इदानीं श्रोतुः प्रवृत्तये विषयप्रयोजनसम्बन्धेषु दर्शयितव्येषु विषयस्तावत्तद्दोषौ शब्दार्थावित्यादिना व्यावृत्तरूपतयाभिधेयं काव्यमित्यग्रे स्पष्टीभविष्यति । प्रयोजनं च प्रतिपादकस्य प्रतिपाद्यप्रतिपत्तिरिति सुगममेव ।

**End:**

इतीति । ध्वनिकृत्प्रभृतीनां विदुषां तत्तद्ग्रन्थगतत्वेन भिन्नविशीर्णसिद्धान्तो मया सङ्कलय्य सुखग्रहणार्थमेकत्र दर्शितः, न तु स्वमनीषिकया कश्चिदपूर्वोऽर्थ उत्पादितः । घटनाचातुर्यात्तु अपूर्वनिमित्तमेवैतत् प्रतीयेत , अतः प्रेक्षावत्प्रवृत्तिकारणमाप्तमूलत्वमस्यास्त्येवेत्यर्थः । ग्रन्थकृता च केनापि कारणेनायं ग्रन्थोऽसमाप्त(पित): पश्चादन्येन पूरितावशेषः । सङ्घटनाकौशलादेककर्तृकवदवभासत इत्यर्थान्तरश्च ध्वन्यते ॥

**Colophon:**

इति श्रीयज्ञेश्वरविरचिते काव्यप्रकाशव्याख्याने दशम उल्लासः समाप्तः ॥

---

No. **12822.** काव्यप्रकाशव्याख्या—मधुमती.

KĀVYAPRAKĀŚAVYĀKHYĀ: MADHUMATĪ.

Substance, paper. Size, 13⅜ × 8⅜ inches. Pages, 214. Lines, 20 on a page. Character, Dēvanāgarī. Condition, good. Appearance, new.

Breaks off in the ninth Ullāsa.

Same work as that described under R. No. 1676 of the Triennial Catalogue of MSS., Vol. II, Part I-C. By Ravi.

---

No. **12823.** काव्यप्रकाशव्याख्या—मधुमती.

KĀVYAPRAKĀŚAVYĀKHYĀ: MADHUMATĪ.

Substance, palm-leaf. Size, 18 × 1⅛ inches. Pages, 201. Lines, 6 on a page. Character, Telugu. Condition, injured. Appearance, old.

Breaks off in the eighth Ullāsa.

Same work as the above.

---

No. **12824.** काव्यप्रकाशव्याख्या—लीला.

KĀVYAPRAKĀŚAVYĀKHYĀ: LĪLĀ.

Substance, paper. Size, 11¼ × 4¾ inches. Pages, 182. Lines, 11 on a page. Character, Dēvanāgarī. Condition, slightly injured. Appearance, new.

Breaks off in the sixth Ullāsa.

A commentary composed by Mahāmahōpādhyāya Bhavadēva, son of Kṛṣṇadēva and pupil of Bhavadēvaṭhakkara, on the Kāvyprakāśa of Mammaṭa. The commentary is called Līlā.

**Beginning :**

श्रवणमननचञ्चद्ध्यानलीलाविलासे मनसि नियतयोगैर्योगिभिर्वीक्ष्यते यः ।
प्रवचनरचनासु व्यज्यते व्यञ्जनाभिः स जयति रसरूपो ब्रह्मरूपो महेशः ॥

यो नाट्येऽभिनये वचःप्रवचने व्यक्तादिभिर्व्यञ्जितो
योगे योगिभिरीक्षितः परिचितो भोगेऽपि भाग्योत्तरैः ।
सर्वत्रैव गुरूपदिष्टविधिना दृष्टो विशिष्टैर्जनैः
श्रीमानेस(ष)मुदर्णवो हरिहरब्रह्मादिरास्ते हृदि ॥

या सूक्ष्मान्तरनुद्गता हृदि गता मध्याक्षरैरूहिता
पश्यन्ती वदनाम्बुजेषु विदुषां स्यादुद्गटा वैखरी ।
सा श्रीनीलसरस्वती भगवती त्रैलोक्यसंतारिणी
तां वाग्दैवतदेवता वचसि मे देयान्मुदं या परा ॥

नत्वा श्रीगणनायकं गिरिसुताकान्तं च मूर्त्यष्टकं
श्रीकान्तं च गुरूंश्च सज्जनतमानन्यान् कवीन्द्रानपि ।
शिष्यः श्रीभवदेवठक्करगुरोः श्रीकृष्णदेवात्मजो
व्याख्यां श्रीभवदेव एष कुरुते काव्यप्रकाशाश्रिताम् ॥

कति कति न कवीन्द्राः कल्पयन्तीह काव्यं
कति कति न च टीकां तत्प्रकाशेऽपि तेनुः ।
तदपि जगति किंचिद्धस्तसंस्पर्शशीला
प्रजयति मम लीला कापि काव्यप्रकाशे ॥

काव्यप्रकाशलीला प्रजयत्यनुमानलीलया सार्धम् ।
मननं तया समन्तादनया प्रत्यक्षमीशस्य ॥

इह खलु सकलशिष्टाचारेण तदनुमितया श्रुत्या च प्रेक्षावान्निर्विघ्नप्रारब्धसमाप्तिकामो मङ्गलमाचरतीति ग्रन्थकृता नियतीत्यादिना कृतं मङ्गलं शिष्याशिक्षायै निबद्धमिति तत्तथाभि(वि)धाभिप्रायं प्रकटीकरोति । गकारादिना गणेशादिस्मृतिस्वरूपं, समुचितेष्टदेवताय(प)दादिना भारतीस्मृत्युत्कीर्तनस्तुत्यादिस्वरूपं च

मङ्गलं स्वयमपि करोति--ग्रन्थेति । सन्दर्भविशेषविशिष्टो महावाक्यसमुदायो बहुतराङ्गप्रत्यङ्गकमहावाक्यार्थप्रतिपादकवर्णसमूहो वा ग्रन्थ इति संप्रदायः । केचित्तु ग्रन्थत्वेन विद्वत्परिभाषाविषयत्वं ग्रन्थत्वमित्याहुः ।

**End:**

अत एव योगशास्त्रे प्रातिभात्सर्वमिति सूत्रम् । तदर्थस्तु प्रति(भा)विशेषात्स्थितादेकविषयकधारणाध्या(न)समाध्यात्मकात्संपर्कात्सरो(र्वं) जानातीति । तथाचात्र योगजधर्मस्तदुत्था व्यञ्जनैव ज्ञेया ज्ञानजनने प्रात्यासत्तिरिति संक्षेपः ॥

**Colophon:**

इति श्रीमन्महामहोपाध्यायसन्मिश्रश्रीभवदेवनिर्मितायां काव्यप्रकाशलालायां पञ्चमोल्लासव्याख्या ॥

एवमुत्तमव्यङ्ग्यात्मके उत्तमकाव्ये गुणीभूतव्यङ्ग्यात्मके मध्यमकाव्ये च निरूपिते प्रकरणप्राप्तत्वेनावसरसङ्गत्या शब्दार्थचित्रत्वेन व्यङ्ग्यरहितत्वेनाधम शब्दार्थचित्रं निरूपयति--शब्दार्थेति ।

* * * *

तत्र शब्दचित्रत्वम् । यत्र शब्दालङ्कारापेक्षया अर्थालङ्कारस्तथा तत्रार्थचित्रत्वं व्यवह्रियते इति भावः । शब्दचित्रे

---

## No. 12825. काव्यप्रकाशव्याख्या—लीला.
## KĀVYAPRAKĀŚAVYĀKHYĀ : LĪLĀ.

Substance, paper. Size, 11 × 8¼ inches. Pages, 304. Lines, 16 on a page. Character, Dēvanāgarī. Condition, good. Appearance, new.

Breaks off in the sixth Ullāsa.

Same work as the above.

---

## No. 12826. काव्यप्रकाशबृहट्टीका—संप्रदायप्रकाशिनी.
## KĀVYAPRAKĀŚABṚHAṬṬĪKĀ : SAMPRADĀYA-PRAKĀŚINĪ.

Substance, paper. Size, 11 × 8¾ inches. Pages, 272. Lines, 20 on a page. Character, Dēvanāgarī. Condition, good. Appearance, new.

Complete.

This commentary on the Kāvyaprakāśa is called Sampradāyaprakāśinī, and is by Vidyādharacakravartin.

**Beginning :**

नामरूपात्मकं विश्वं यस्य लीलामयं वपुः ।
प्रकाशाय नमस्तस्मै सविमर्शाय शम्भवे ॥
स्वरूपज्योतिषो वाचः परायाः प्रसरोर्मयः ।
आविर्भवन्तु मे वक्त्रादर्थयाथार्थ्यदीपिकाः ॥
श्रीचक्रवर्तिकविना संप्रदायप्रकाशिनी ।
टीका काव्यप्रकाशस्य बृहतीयं विरच्यते ॥
नेह संतन्यतेऽस्माभिर्वृथा सन्दर्भडम्बरः ।
व्याख्येयवस्तुयाथार्थ्यप्रकाशैकपरायणैः ॥
सन्तो मामनुगृह्णन्तु येऽधिका ये च मे समाः ।
अन्ये यथेष्टं चेष्टन्तां तानहं वेद्मि तत्त्वतः ॥

वस्तुनिर्देशमेवेष्टदेवतानुसन्धानात्मकमभिसन्धायाह वृत्तिकारः—ग्रन्थारम्भ-इत्यादिना । ग्रन्थस्याविघ्नेन परिसमाप्तिः प्रचयावाप्तिश्च विघ्नानां विघातः समुचितेत्यनेनेष्टत्वे सत्यपि अधिकृतायां देवतायां प्रतिपत्तिगौरवार्हत्वमनुसन्धत्ते । काव्यमीमांसाशास्त्रारम्भे हि कविवाग्रूपा देवतैवाधिकृतेति समुचिता । परामृशति नमस्कर्तव्यत्वेनानुसन्धत्ते । नियतिः नियामिका शक्तिः । यदुक्तं तान्त्रिकैः—नियतिर्नियमनरूपेति ।

**End :**

एष मार्गः सन्दर्भसरणिः विदुषां विभिन्नोऽपि परस्परस्य विलक्षणोऽप्यभिन्नरूपो यत् प्रतिभासते मन्मथसन्दर्भमनुरूपो यत्प्रतीयते न तद्विचित्रम् । यतोऽत्र भिन्नरूपप्रतिभासे चित्रं विनिर्मिता स्वां रेखां परित्यज्य मन्मथविजित्यनुसारेण विविधमस्माभिर्विरचिता ग्रन्थसङ्कटनैव हेतुः । इतरसरण्यनुसारेणापि प्रणयननिपुणत्वेन द्योतितमिति शिवम् ॥

सम्यक् प्रकाशिता सेयं श्रीविद्याचक्रवर्तिना ।
टीका काव्यप्रकाशस्य सम्प्रदायप्रकाशिनी ॥
काव्यप्रकाशेऽलङ्कारसर्वस्वे(च) सचेतसाम् ।
योऽनादरो महांस्तेन व्याख्यातमुभयं सह ॥
यस्मिन्नंशे झटिति न भवत्यर्थसंवित्तिरस्यां
सोऽधोमूले विषमविषमो मूलमालोक्य भूयः ।

तत्सङ्गत्या पुनरिह मनाग्दृष्टिराधीयते चेत्
भावः सूक्ष्मो व्रजति विदुषां हस्तमुक्तामणित्वम् ॥
सूक्ष्ममप्याकुलामत्र शास्त्रयुक्त्युपबृंहिताम् ।
मीमांसामुपजीवन्तु कृतिनः काव्यतान्त्रिकाः ॥

**Colophon:**

इति श्रीविद्याधरचक्रवर्तिविरचितायां काव्यप्रकाशबृहट्टीकायां सम्प्रदायप्रकाशिकायामर्थालङ्कारविवेचनो नाम दशम उल्लासः ॥

The scribe adds—

पीताम्बरलसत्पीतगोपीताम्राधरं सदा ।
पातु वः पातकध्वंसि पूतनापातकं महः ॥
नारायणसरस्तीरवासिनः कैटभद्विषः ।
पादाब्जसेविना सेयं कृष्णनाम्नालिखि स्वयम् ॥

---

No. **12827.** काव्यप्रकाशव्याख्या—सारबोधिनी.

KĀVYAPRAKĀŚAVYĀKHYĀ : SĀRABŌDHINĪ.

Substance, paper. Size, $12\frac{1}{4} \times 7\frac{7}{8}$ inches. Pages, 222. Lines, 29 on a page. Character, Telugu. Condition, slightly injured. Appearance, old.

Breaks off in the ninth Ullāsa.

A commentary on the Kāvyaprakāśa of Mammaṭa by Śrīvatsa Śarman.

**Beginning:**

रामं नत्वा चिदानन्दं संदीप्रां सारबोधिनीम् ।
श्रीवत्सशर्मा निर्माति व्याख्यां काव्यप्रकाशिनीम् ॥

कारिकामवतारयति—ग्रन्थेति । पञ्चाङ्कं वाक्यं ग्रन्थः । तदुक्तम्—

विषयो विशयश्चैव पूर्वपक्षस्तथेत(थोत्त)रम् ।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥ इति ।

* * * *

अस्य व्याख्यानस्य व्याख्येयानुसारित्वाभावात् । नियतीत्यादि । वस्तुतस्तु परामृशति परामर्शविषयीकरोति । परामर्शश्च जयव्याप्यैनादृशविलक्षणनिर्मित्याधानवतीत्याकारो नियतीत्यादिहेतुगर्भविशेषणचतुष्टयेन लभ्यते । अत एव वक्ष्यति एतद्विलक्षणा तु कार(कवि)वाङ्निर्मितिः । अत एव जयतीति कवेर्भारतीति सम्बन्धः ।

**End:**

स्वोक्तिविरुद्धमिति ध्येयम् ॥

**Colophon:**

इति सारबोधिन्यामष्टम उल्लासः ॥

प्राप्तावसरा इति । तेनालङ्कारनिरुक्तावसर एव सङ्गतिरिति व्यक्तमुक्तम् । शब्दालङ्कारानिति । काव्यलक्षणे शब्दस्य प्रागुपादानादिति शेषः । शब्दचित्रमर्थचित्रमिति यच्चित्रभेदद्वयमुक्तं तस्यैव भेदा उल्लासाभ्यामूह्या इत्यपि ध्वनितम् । तदुक्तमिति ।

* * * *

रामं प्रति स्पर्धा चानुभाव ऐरावतकुम्भो . . . स्मृतिर्लज्जां दधति गम्यो गर्वश्च सञ्चारिणौ ।

---

No. **12828.** काव्यप्रकाशव्याख्या—साहित्यचूडामणिः.

KĀVYAPRAKĀŚAVYĀKHYĀ : SĀHITYACŪḌĀMAṆIḤ.

Substance, palm-leaf. Size, 17 × 1½ inches. Pages, 295. Lines, 7 on a page. Character, Telugu Condition, injured Appearance, new.

Contains the Ullāsas one to nine complete, and the tenth almost complete.

Same work as that described under R. No. 1282 of the Triennial Catalogue of MSS., Vol. II, Part I-A, wherein see for the beginning. By Rōhitya Bhaṭṭa Gōpāla.

**End:**

इत्थं प्रणीतानि (परीक्ष्य) पूर्वैः शब्दानुसारीणि विभूषणानि ।
यदेवमन्यत्परिवृत्तिरेखापराङ्मुखं तत्स्वयमूहनीयम् ॥

**Colophon:**

इति साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां नवम उल्लासः ॥

वन्दे वाणीं महोत्कर्षमहोत्सवविहारिणीम् ।
सर्वाङ्गीणसमुन्मीलदमूल्यमणिभूषणाम् ॥
उपमानन्वयौ पूर्वमुपमेयोपमा ततः ।
अथोत्प्रेक्षा ससन्देहरूपकावह(पह्न)वाविति ॥

* * * *

तद्व्यावृत्त्यर्थमाह—आधिक्यमिति । चिरन्तनाः खलु भेदप्राधान्यमुपमानात् उपमेयस्याधिक्ये विपर्यय एव व्यतिरेक इति अत्र सूत्रयन्तः आधिक्यमधिकगुणत्वलक्षणं यथायो.

## No. 12829. काव्यलक्षणम्.

## KĀVYALAKṢAṆAM.

Substance, palm-leaf. Size, $18\frac{3}{8} \times 1\frac{1}{2}$ inches. Pages, 58. Lines, 8 on a page. Character, Grantha. Condition, slightly injured. Appearance, new.

Incomplete.

A work treating of the characteristics of poems and dramatic compositions of different kinds. The name of the author is not given.

Copying was finished on the 18th of the Āvaṇi in the Ānanda year.

**Beginning:**

नियत्यनियतां ह्लादमयीं नवरसोज्ज्वलाम् ।
कृतिं स्वतन्त्रां कुर्वाणा कवेर्जयति भारती ॥
काव्यं हि यशसेऽर्थाय शिवेतरनिवृत्तये ।
कान्तावदुपदेशाय परनिर्वृतये क्षणात् ॥
शक्तिर्निपुणतालोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे[त्] ॥
काव्यं ह्यदुष्टौ सगुणौ शब्दार्थौ सदलंकृती ।
वाच्यातिशायिव्यङ्ग्यं यदुक्तमन्तर्ध्वनिश्च सः ॥
[काव्यन्तु] वीक्ष्य रामं घनश्यामं सीता जाता नमन्मुखी ।
काव्यं तु मध्यमं व्यङ्ग्ये वाच्यादनतिशायिनी ॥
तदेव च गुणीभूतव्यङ्ग्यमित्युच्यते बुधैः ।

* * * *

वाक्याडम्बरसंयुक्ता सा मता बिरुदावली ।
ताराणां संख्यया पद्यैर्युक्ता तारावली मता ॥

इति काव्यप्रकरणाः ।

दोषः काव्यापकर्षस्य हेतुः शब्दार्थगोचरः ।
पादादावपि खल्वादेः प्रयोगः काव्यदूषकः ॥

* * * *

यो हेतुः काव्यशोभायाः सोऽलङ्कारः प्रकीर्तितः ।
गुणोऽपि तादृशो ज्ञेयो दोषः स्यात्तद्विपर्ययः ॥

* * * *

इति गुणप्रकरणम् ।

रसाभिज्ञानयोग्यत्वं भाव इत्यभिधीयते ।
विभावश्चानुभावश्च सात्विकव्यभिचारिणौ ॥

*                *                *                *

शृङ्गारहास्यकरुणा स्त्रीरागेण प्रगीयते ।
भयानके च बीभत्से रागो ज्ञेयो नपुंसकः ॥

*                *                *                *

इति रसप्रकरणम् ।

नाटकश्च प्रकरणं भाणः प्रहसनं डिमः ।
वीथीसमवकाराङ्का व्यायोगेहामृगा इति ॥

**End:**

न कुर्यात्तस्य . . . . . वधात्तां मोचयेत् स्त्रियम् ।
स्त्रीनिमित्तकसंग्रामस्सोऽयमीहामृगो भवेत् ॥
मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिकम् ।
मर्त्यदिव्यौ च नियमात् नायकप्रतिनायकौ ॥
धीरोद्धतौ स्त्रियन्दिव्यां हन्तुकामौ च कामुकौ ।
अवधं युद्धमन्योन्यमाभासरसयोस्तयोः ॥

**Colophon:**

इति शब्दरूपप्रकरणम् ॥

---

No. **12830.** काव्यादर्शः.

KĀVYĀDARŚAḤ.

Pages, 66. Lines, 23 on a page.

Begins on fol. 132*a* of the MS. described under No. 11901.

Complete.

A well-known work on poetics and rhetoric by Daṇḍin in three Paricchēdas:

(१) मार्गविभागपरिच्छेद, (२) अर्थालङ्कारविभागपरिच्छेद, (३) शब्दालङ्कारदोषविभागपरिच्छेद, called in this MS. दुष्करपरिच्छेद.

The work with two commentaries has been edited by the late Professor M. Raṅgācārya of Madras.

**Beginning:**

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥ १ ॥
पूर्वशास्त्राणि संहृत्य प्रयोगानुपलक्ष्य च ।
यथासामर्थ्यमस्माभिः क्रियते काव्यलक्षणम् ॥ २ ॥
इह शिष्टा(नुशिष्टा)नां [वि]शिष्टानामपि सर्वदा ।
वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ॥ ३ ॥

इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं प्रवर्तते (न दीप्यते) ॥ ४ ॥
आदिराजयशो(बि)म्बमादर्शं प्राप्य वाङ्मयम् ।
तेषामसन्निधानेऽपि स्वयं पश्य न नश्यति ॥ ५ ॥
गौर्गौः कामधुगानम्य प्रयुक्ता स्मर्यते बुधैः ।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुं नैव शस्यति ॥ ६ ॥
तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन ।
स्याद्वपुस्सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ॥ ७ ॥
गुणदोषौ न शास्त्रज्ञः कथं विभजते जनः ।
किंचुन्द(मन्ध)स्याधिकारोऽस्ति रूपभेदोपलब्धिषु ॥ ८ ॥
अतः प्रजानां व्युत्पत्तिमभिसन्धाय सूरयः ।
वाचा विचित्रमार्गाणां निबबन्धुः क्रियाविधिम् ॥ ९ ॥
तैश्शरीरञ्च काव्यानामलङ्कारश्च दर्शितम् ।
शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावलि ॥ १० ॥
पद्यं गद्यञ्च मिश्रञ्च तत्रिधैवं व्यवस्थितम् ।
पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा ॥ ११ ॥
छन्दोविचित्यां सकलस्तत्प्रपञ्चो निदर्शितः ।
सा विद्या न(नौ)स्तितीर्षूणां गम्भीरं काव्यसागरम् ॥ १२ ॥
मुक्तकं कुलकं कोशः सङ्घातश्चापि तादृशः ।
सर्गबन्धाङ्गरूपत्वादनुक्तः पद्यविस्तरः ॥ १३ ॥
सर्गबन्धो महाकाव्यमुच्यते काव्यलक्षणम् ।
आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ॥

**End:**

ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम् ।
अबलाविरहक्लेशविह्वलो गणयत्यलम् ॥
प्रमेयोऽप्यप्रमेयोऽसि सकलोऽप्यसि निष्कलः ।
एकस्त्वमप्यनेकोऽसि नमस्ते विश्वमूर्तये ॥
पञ्चानां पाण्डुपुत्राणां पत्नी पाञ्चालकन्यका ।
सीतं(सती)नामग्रणीप्या(श्रा)सीत् दैवो हि विधिरीदृशी(श) ॥

शब्दार्थालङ्क्रियाश्चित्रमार्गास्सुकरदुष्कराः ।
गुणदोषाश्च कार्याणामिति संक्षिप्य दर्शिताः ॥
उ(व्यु)त्पन्नबुद्धिरमुना विधिदर्शितेन मार्गेण दोषगुणयोर्वशवर्तिनीभिः ।
वाग्भिः कृताभिसरणो मदिरेक्षणाभिः धन्यो युवेति (व रमते ल)फते(भते)च [कीर्तिः(म्) ॥

**Colophon:**

इत्याचार्यदण्डिनः कृतौ काव्यादर्शे दुष्करो नाम तृतीयपरिच्छेदः ॥

---

No. **12831.** काव्यादर्शः.
KĀVYĀDARŚAḤ.

Substance, paper. Size, $7\frac{7}{8} \times 6$ inches. Pages, 48. Lines, 21 on a page. Character, Telugu. Condition, good. Appearance, old.

Complete.

Same work as the above.

---

No. **12832.** काव्यादर्शः.
KĀVYĀDARŚAḤ.

Substance, palm-leaf. Size, $16\frac{3}{8} \times 1\frac{1}{4}$ inches. Pages, 42. Lines, 9 on a page. Character, Grantha. Condition, injured. Appearance, old.

Begins on fol. 1*a*. The other work herein is Kāvyādarśavyākhyā 22*a*.

Complete in three Paricchēdas.

Same work as the above. The name Kāvyālaṅkāra is written in the MS. by mistake.

---

No. **12833.** काव्यादर्शः, हृदयङ्गमव्याख्यासहितः.
KĀVYĀDARŚAḤ WITH THE HṚDAYAṄGAMA-VYĀKHYĀ.

Substance, paper. Size, $13\frac{1}{2} \times 9$ inches. Pages, 218. Lines, 20 on a page. Character, Dēvanāgarī Condition, good. Appearance, new.

Contains one to two Paricchēdas complete, and the third incomplete.

This commentary on the Kāvyālaṅkāra is called Hṛdayaṅgamā and its author is not known.

**Beginning:**

शास्त्रमारभमाणानां विदुषामाशीर्नमस्क्रियावस्तुनिर्देशेष्वन्यतमस्य करणीयत्वात् असावपि काव्यादर्शकारः सकलकलाकलापालोकनविनिश्चितबुद्धिराचार्यः

स्वशास्त्रस्याविघ्नसमाप्तये वाग्देवतां मनसि प्रतिष्ठापयितुकाम आशीर्वादमुखेन सरस्वतीं स्तौति ।

(मू) ॥ चतुर्मुखमुखाम्भोज . . . सरस्वती ॥

(व्या) ॥ कमलासनस्य मुखकमलवने हंसवधूरिव रममाणा सर्वशुक्ला सरस्वती मानसाख्ये सरसि कमलवनसञ्चारिणी हंसी यथा रमते तथा मम चेतसि दीर्घं रमतामित्याशास्ते ।

* * * *

प्रतिपाद्यस्तावत् सर्वेषु लक्षणशास्त्रेषु विप्रकीर्णस्य काव्यस्य लक्षणस्य समुच्चयरूपः । तस्य प्रतिपादकोऽयं ग्रन्थः । तयोरयं प्रतिपाद्यप्रतिपादकलक्षणतया सम्बन्धा दृश्यन्ते ।

* * * *

**Colophon:**

इति दण्ड्यलङ्कारव्याख्याने हृदयङ्गमे वैदर्भगौढमार्गविभागो नाम प्रथमः परिच्छेदः ॥

**End:**

उक्तेषु लक्षणान्तरेषु दर्शितानामन्येषामन्तर्भाव इति यावत् ॥

**Colophon:**

इति दण्डिव्याख्यायां द्वितीयः परिच्छेदः ॥

अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः ।
यमकं तच्च पादानामादिमध्यान्तगोचरम् ॥

इह खलु पूर्वमेव शब्दालङ्कारलक्षणानन्तरमावृत्तिमेव सङ्घातगोचराम् ।

* * * *

अयमर्थः । पण्डिताः केशवानुसारी शोभनोरुसहितः सुरारसास्वादी बलभद्रः ।

No. 12834. काव्यादर्शव्याख्या.

KĀVYĀDARŚAVYĀKHYĀ.

Pages, 70. Lines, 21 on a page.

Begins on fol. 94*a* of the MS. described under No. 12465.

Complete.

A commentary by Sādhu Taruṇavācaspati on the Kāvyādarśa of Daṇḍin described above. It has been printed by the late Professor M. Raṅgācārya of Madras.

**Beginning:**

काव्यलक्षणात्मकं प्रबन्धमारभमाणः तस्य निष्प्रत्यूहपरिसमाप्त्यर्थं शब्दादिदेवतां सरस्वतीं स्वचित्ते सन्निधिं प्रार्थयते—

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥

चतुर्मुखस्य मुखाम्भोजवने हंसवधूर्हंसीभवति । सर्वशुक्ला सर्वस्मात् शुक्लतरा सर्वस्मात् स्वेतरस्माच्छुक्लपदार्थात् अतिशयेन शुक्ला वृत्तौ तरपो लोप इति वचनात् समास्त(सात्त)रपो लोप इति सर्वशुक्लेति रूपसिद्धिः ।

* * * *

**Colophon:**

इति तरुणवाचस्पतिविरचितायां काव्यादर्शटीकायां प्रथमः परिच्छेदः ॥

इति काव्यादर्शटीकायां द्वितीयपरिच्छेदः ।

इति तरुणवाचस्पतिविरचितायां काव्यालङ्कारटीकायां तृतीयपरिच्छेदः ॥

**End:**

इति अस्याः बहुभर्तृत्वमागमविरुद्धं पञ्चद्रो(द्रौपद्यु)पाख्यानेन जन्मान्तरवरप्रदानेन द्रौपद्यां पञ्चभर्तृत्वमपि पातिव्रत्यमित्यागमविरोधस्य गुणत्वमिति प्रबन्धार्थमुपसंहरति—इति शब्दार्थालङ्क्रिया इति । प्रथमद्वितीयपरिच्छेदोक्ताः शब्दार्थालङ्क्रियाः तृतीयपरिच्छेदोक्ता यमकादिविषयं(याः)सुकरदुष्करमार्गा अपार्थादयो दोषास्तद्गुणकरणेनोक्ता गुणाश्च संक्षिप्य दर्शिता इति प्रबन्धस्य प्रयोजनम् कथयति—व्युत्पन्नेति । एतत्प्रबन्धपरिशीलनफलं कवित्वस्य स्वर्गनिवासफला कीर्तिरिति ।

साहित्यसौहित्यं येन अप्राप्तं तेन ।

**Colophon:**

काव्यादर्शव्याख्या[न]निर्मिता साधु तरुणवाचस्पतिना काव्यादर्शव्याख्यानं समाप्तम् ॥

---

No. **12835.** काव्यादर्शव्याख्या— हृदयङ्गमा.

KĀVYĀDARŚAVYĀKHYĀ : HṚDAYAṄGAMĀ.

*Pages*, 86. Lines, 10 on a page.

Begins on fol. 22*a* of the MS. described under No. 12832.

Breaks off in the third Paricchēda.

Same work as the above.

No. **12836.** काव्यानुशासनम्, अलङ्कारचूडामणिसहितम्.
KĀVYĀNUŚĀSANAM WITH ALAṄKĀRACŪḌĀMAṆI.

Substance, paper. Size, 11 × 8¾ inches. Pages, 231. Lines, 20 on a page. Character, Dēvanāgarī. Condition, good. Appearance, new.

Breaks off in the eighth Adhyāya.

A work on poetics and rhetoric. The subjects dealt with herein are apparent from the titles of the Adhyāyas given below. The text is accompanied by a commentary called Alaṅkāracūḍāmaṇi The author of the work as well as of the commentary is Ācārya Hēmacandra. They have been published in the Kāvyamālā.

१. अलंकारादिलक्षणम्.
२. रसभावतदाभासकाव्यभेदप्रतिपादनम्.
३. दोषविवेचनम्.
४. गुणविवेचनम्.
५. शब्दालंकारवर्णनम्.
६. शब्दार्थालंकारवर्णनम्.
७. नायकवर्णनम्.
८. काव्यभेदादिवर्णनम्.

**Beginning:**

प्रणम्य परमात्मानं निजं काव्यानुशासनम् ।
आचार्यहेमचन्द्रेण विद्वत्प्रीत्यै वितन्यते ॥

ग्रन्थारम्भे शिष्टसमयपरिपालनाय शास्त्रकारः समुचितेष्टदेवतां प्रणिधत्ते—

अकृत्रिमस्वादुपदां परमार्थाभिधायिनीम् ।
सर्वभाषापरिणतां जैनीं वाचमुपास्महे ॥

रागादिजेतारो जिनाः । तेषामियं जैनी; जिनोपज्ञम् । अनेन कारणशुद्ध्योपादेयता । उच्यत इति वाक्; वर्णपदवाक्यादिभावेन भाषा द्रव्यपरिणतिस्तामुपास्महे । उपासनं योगप्रणिधानम् ।

* * * *

**Colophon:**

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञकस्वोपज्ञकाव्यानुशासनवृत्तौ प्रथमोऽध्यायः ॥

**End:**

शाक्याचार्याः बाहुलादयस्तु मौग्ध्यमदविभाविकत्वपरितपनादीनप्यलंकारानाचक्षते । तेऽस्माभिर्भरतमतानुसारिभिरुपेक्षिताः ॥

**Colophon:**

इत्याचार्यहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ नायकवर्णनं नाम सप्तमोऽध्यायः ।

अथ प्रबन्धात्मकान् काव्यभेदानाह—काव्यं प्रेक्ष्यं श्रव्यं च ।

उत्तमानां कृतकं भयं स्थायीभावश्चर्वणीयतामागतो भयानको रसः—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रम.

---

No. **12837.** काव्यालङ्कारसूत्राणि, वृत्तिसहितानि.

KĀVYĀLAṄKĀRASŪTRĀṆI WITH VṚTTI.

Substance, palm-leaf. Size, $16\frac{1}{2} \times 1\frac{3}{4}$ inches. Pages, 52. Lines, 12 on a page. Character, Grantha. Condition, good. Appearance, new.

Begins on fol. 1*a*. The other works herein are Kāvyālaṅkārasūtra-vṛttivyākhyā (Kāvyālaṅkārakāmadhēnu) 27*a*, Ṣaḍbhāṣācandrikā 35*a*.

Complete in five Adhikaraṇas.

Short aphorisms on the subject of rhetoric and poetics by Vāmana, along with an explanatory exposition thereon by himself. He is said to have lived in the eighth century. The work has been printed and published in several places and with the commentary, Kāmadhēnu, in the Vāṇī Vilās Press, Srirangam.

**Beginning:**

वेधोवदनराजीववनहंसी सरस्वती ।
सत्पक्षपाता सततं मानसे रमतां मम ॥
प्रणम्य परमं ज्योतिर्वामनेन कविप्रिया ।
काव्यालङ्कारसूत्राणां स्वैषा वृत्तिर्विधास्यते ॥

काव्यं ग्राह्यमलङ्कारात् । काव्यं खलु ग्राह्यमुपादेयं भवत्यलङ्कारात् । काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते ।

* * * *

तस्मात्कीर्तिमुपादातुमकीर्तिं च व्यपोहितुम् ।
काव्यालङ्कारशास्त्रार्थः प्रसाध्यः कविपुङ्गवैः ॥

**Colophon:**

इति शारीरके प्रथमेऽधिकरणे प्रथमोऽध्यायः ॥

**End:**

नेन्द्रवाहनशब्दे णत्वमाहितत्वस्याविवक्षितत्वात् । इन्द्रवाहनशब्दे वाहन-

माहितादिति णत्वं न भवति ; आहितत्वस्याविवक्षितत्वात् स्वस्वामिभावमात्रं ह्यत्र विवक्षितम् । तेन सिद्धमिन्द्रवाहनमिति ।

सदसन्तो मया शब्दा विचिन्त्यार्ये मयोदिताः (विविच्यैवं निदर्शिताः)।
अनयैव दिशा कार्यं शेषाणामुपलक्षणम् ॥

**Colophon:**

इति काव्यालङ्कारवृत्तावाचार्यवामनविरचितायां पञ्चमेऽधिकरणे शब्दशुद्धिर्नाम द्वितीयोऽध्यायः ॥

समाप्तेयं काव्यालङ्कारसूत्रवृत्तिः ॥

---

## No. **12838.** काव्यालङ्कारसूत्राणि, वृत्तिसहितानि.

## KĀVYĀLAṄKĀRASŪTRĀṆI WITH VṚTTI.

Substance, palm-leaf. Size, $16\frac{3}{4} \times 1\frac{1}{4}$ inches. Pages, 63. Lines, 6 on a page. Character, Grantha and Nandināgarī. Condition, slightly injured. Appearance, old.

Begins on fol. 1*a*. The other work herein is Alaṅkāraviṣaya 32*a*.

Complete.

Same work as the above.

---

## No. **12839.** काव्यालङ्कारसूत्राणि, वृत्तिसहितानि.

## KĀVYĀLAṄKĀRASŪTRĀṆI WITH VṚTTI.

Pages, 92. Lines, 20 on a page.

Begins on fol. 1*a* of the MS. described under No. 11851.

Complete.

Same work as the above.

---

## No. **12840.** काव्यालङ्कारसूत्राणि, वृत्तिसहितानि.

## KĀVYĀLAṄKĀRASŪTRĀṆI WITH VṚTTI.

Pages, 94. Lines, 6 on a page.

Begins on fol. 1*a* of the MS. described under No. 4377, wherein this work has been mentioned as Vamanasutravṛtti in the list of other works given therein

Complete.

Same work as the above.

---

## No **12841.** काव्यालङ्कारसूत्राणि, वृत्तिसहितानि.

## KĀVYĀLAṄKĀRASŪTRĀṆI WITH VṚTTI.

Substance, paper. Size, $12\frac{3}{4} \times 7\frac{7}{8}$ inches. Pages, 16. Lines, 29 on a page. Character, Telugu. Condition, fair. Appearance, old.

Begins on fol. 1*a*. The other work herein is Kāvyālaṅkārasūtravṛttivyākhyā : Kāvyālaṅkārakāmadhēnu 24*a*.

Complete.

Same work as the above.

---

No. **12842.** काव्यालङ्कारसूत्रवृत्तिव्याख्या—काव्यालङ्कारकामधेनुः.
KĀVYĀLAṄKĀRASŪTRAVṚTTIVYĀKHYĀ : KĀVYĀLAṄKĀRAKĀMADHĒNUḤ.

Pages, 186. Lines, 20 on a page.

Begins on fol. 111*a* of the MS. described under No. 11851.

Complete.

A commentary composed by Gōpēndra Tippa Bhūpāla, who is said to have belonged to the lunar race of Kings, on the Kāvyālaṅkārasūtravṛtti of Vāmanācārya. The author salutes Bhāmaha in the beginning. The subjects dealt with in the ten Adhyāyas of the work are briefly indicated in the extract from the beginning.

**Beginning:**

कल्याणानि करोतु वस्स भगवान् क्रीडावराहाकृतिः
दंष्ट्राग्रेण नवप्ररोहपुलकां देवीं धरामुद्वहन् ।
यस्याङ्गेषु वहन्ति रोमविवरालग्ना महाम्भोधयः
कान्तस्पर्शसुखादिव प्रकटितां स्वेदोदबिन्दुश्रियम् ॥
दरोन्मीलत्फालद्युतिमदमृतस्यन्दिशुभिकं
भ्रमन्मीनोष्णीषं पदसरणिपारीणवलयम् ।
विराजद्दम्भावव्यतिकरितपुम्भावसुभगं
पुरस्तादाविस्स्यात् भुवनपितरौ तन्मम महः ॥
ओङ्कारमणिघण्टेऽनुरणन्निगमबृंहितम् ।
चित्ते शृङ्खलिनं भक्त्या चिन्तये चिन्मयं गजम् ॥
करुणामसृणालोकप्रवणा शरणार्थिषु ।
प्रगुणाभरणा वाणी स्मरणानुगुणास्तु मे ॥
उन्मीलत्प्रतिभानकन्दमुदयत्संदर्भनालं लसत्
श्लेषाद्याकुलशब्दपत्रमतुलं बन्धारविन्दं सदा ।
अध्यासीनमलङ्क्रियापरिलसद्गन्धं वचोदैवतं
वन्दे रीतिविकासमाशुविगलन्माधुर्यपुष्पासवम् ॥
नमस्कुर्वे सर्वेतरविविधविद्याविलसितान्
प्रवाचः प्राचोऽहं प्रथितयशसो भामहमुखान् ।

कृता यैरर्थानां कृतिषु नयचर्चा सदसतां
प्रभेवाभिव्यक्तिं प्रजनयति भासामधिपतेः ॥
पावनी वामनस्येयं पदोन्नतिपरिष्कृता ।
गम्भीरा राजते वृत्तिः गङ्गेव कविहर्षिणी ॥
प्रबन्धं तालानां भवनुतिमिषेणातनुत यः
शिलाक्लृप्ताकारा नटनकरणानामपि भिदाः ।
स वृत्तेर्व्याख्यानं सकलरचनं वामनकृतेः
विधत्ते गोपेन्द्रत्रिपुरहरभूपालतिलकः ॥
पावनपदविन्यासा समग्ररसदोहशालिनी भजताम् ।
घटयति कामितमर्थं काव्यालङ्कारकामधेनुरियम् ॥
यत्रोपयुज्यते यावत् तावत्तत्र निरूप्यते ।
प्रसङ्गानुप्रसङ्गेन नात्र किंचित् प्रपञ्च्यते ॥
अभ्यर्थिके मय्यनुकम्पया वा साहित्यसर्वस्वसमीहया वा ।
मदीयमार्या मनसा निबन्धमिमं परीक्षध्वममत्सरेण ॥
अध्याये प्रथमे काव्ये प्रयोजनपरीक्षणा ।
अधिकारिविचारश्च द्वितीये रीतिनिश्चयः ॥
काव्याङ्गकाव्यभेदानां तृतीये प्रतिपादनम् ।
तुर्ये पदपदार्थानां दोषतत्त्वविवेचनम् ॥
वाक्यवाक्यार्थदोषाणां पञ्चमे तु प्रपञ्चनम् ।
गुणालङ्कारभेदस्तु षष्ठे शब्दगुणास्तथा ॥
सप्तमेऽर्थगुणाश्शब्दालङ्काराः पुनरष्टमे ।
उपमा नवमे तस्याः प्रपञ्चो दशमे भवेत् ॥
काव्यस्यैकादशे संवित् द्वादशे शब्दशोधनम् ।
इत्येष द्वादशाध्यायप्रमेयानामनुक्रमः ॥

अथ ग्रन्थकारः स्वकर्तृकाणि सूत्राणि व्याकर्तुकामः प्रारम्भ एव प्राचीनाचार्यपरम्परासमाचारपरिप्राप्तकर्तव्यभावेतिकर्तव्यताविशेषरूपमङ्गलानुष्ठानेन स्वयं प्रारिप्सितग्रन्थपरिसमाप्तिपारिपन्थिप्रत्यूहव्यूहप्रतिहननप्रगल्भसमग्रदेवतानुग्रह-सम्पन्नोऽपि व्याख्यातृश्रोतॄणामविघ्नव्याख्यानश्रवणलाभाय ग्रन्थादौ तन्मङ्गल-निबन्धनपूर्वकं तत्प्रवृत्तिसिद्धये विषयप्रयोजनानि दर्शयन् आद्येन पद्येन

कर्तव्यं प्रतिजानीते— प्रणम्येति । भक्तिश्रद्धातिशयलक्षणः प्रकर्षः प्रशब्देनात्र प्रकाश्यते तादृगेव हि मङ्गलमन्तरायसन्तानशान्तिं सन्तनोति; अन्यथा कृतायामपि कृतौ प्रारिप्सितग्रन्थः परिसमाप्तिं न संपादयेत् किरणावल्यादौ तथा दर्शनात् ।

**End:**

शब्दार्थौ चरणौ प्रतीकविसरो वाक्यानि गुम्भो लस-
न्मूर्तिर्वस्तु शिरः परिष्कृतिरलङ्कारो नवो रीतयः ।
यस्याः स्वीयगुणागुणास्सुरुचिराः शृङ्गारचेष्टादयः
रम्याष्टादशवर्णनाः कृतिवधूस्सेयं जगन्मोहिनी ॥

**Colophon:**

इति गोपेन्द्रतिप्पभूपालविरचितायां वामनालङ्कारवृत्तिव्याख्यायां काव्यालङ्कारकामधेनौ प्रायोगिके पञ्चमेऽधिकरणे द्वितीयोऽध्यायः ॥

इति कृतरचनायामिन्दुवंशोद्भवेन त्रिपुरहरधरित्रीमण्डलाखण्डलेन ।
ललितवचसि काव्यालङ्क्रियाकामधेनौ अधिकरणमयासीत्पञ्चमं पूर्तिमेतत् ॥

समाप्तमिदं प्रायोगिकं पञ्चममधिकरणम् ॥
समाप्ता चेयं काव्यालङ्कारकामधेनुः ॥

---

No. **12843.** काव्यालङ्कारसूत्रवृत्तिव्याख्या—काव्यालङ्कारकामधेनुः.

KĀVYĀLAṄKĀRASŪTRAVṚTTIVYAKHĀ: KĀVYĀLAṄKĀRAKĀMADHĒNUḤ.

Substance, paper. Size, $13\frac{1}{8} \times 8\frac{1}{4}$ inches. Pages, 148. Lines, 20 on a page. Character, Dēvanāgarī and Telugu. Condition, good. Appearance, new.

Begins on fol. 17*a*. The other work herein is Sāhityakaṇṭakōddhāra 1*a*.

Complete.

Same work as the above.

---

No. **12844.** काव्यालङ्कारसूत्रवृत्तिव्याख्या— काव्यालङ्कारकामधेनुः.

KĀVYĀLAṄKĀRASŪTRAVṚTTIVYAKHYĀ: KĀVYĀLAṄKĀRAKĀMADHĒNUḤ.

**Pages**, 16. Lines, 12 on a page.

Begins on fol. 27*a* of the MS. described under **No.** 12837.

Breaks off in the first Adhikaraṇa.

Same work as the above.

No. **12845.** काव्यालङ्कारसूत्रवृत्तिव्याख्या—काव्यालङ्कारकामधेनुः.

KĀVYĀLAṄKĀRASŪTRAVṚTTIVYĀKHYĀ : KĀVYĀLAṄKĀRAKĀMADHĒNUḤ.

Pages, 112. Lines, 29 on a page.

Begins on fol. 24*a* of the MS. described under No. 12841.

Complete.

Same work as the above.

---

No. **12846.** कुवलयानन्दः.

KUVALAYĀNANDAḤ.

Substance, paper. Size, $11\frac{5}{8} \times 7\frac{5}{8}$ inches. Pages, 150. Lines, 21 on a page. Character, Telugu. Condition, good. Appearance, new.

Begins on fol. 16*b*. The other work herein is Candrālōka 1*b*.

Complete.

By Appayadikṣita. Same work as that described under No. 33, on pages 81, 82, 227 and 228 of M. Seshagiri Sastri's Report No. 2, wherein see for the beginning.

The work has been printed with its commentary, Rasikarañjanī, at Kumbakonam.

**End :**

एवमन्यत्र श्लोके चतुर्णामपि संकराणां यथायोगं संकरः । एवमन्यत्राप्युदाहरणान्तराण्यूहनीयानि ॥

अमुं कुवलयानन्दमकरोदप्पदीक्षितः ।
नियोगाद्वेङ्कटपतेर्निरुपाधिकृपानिधेः ॥
चन्द्रालोको विजयते शरदागमसंभवः ।
हृद्यः कुवलयानन्दो यत्प्रसादादभूदयम् ॥

**Colophon :**

श्रीमदद्वैतविद्याचार्यभारद्वाजकुलजलनिधिकौस्तुभश्रीरङ्गराजाध्वरीन्द्रवरसूनोरप्पयदीक्षितस्य कृतिः कुवलयानन्दः समाप्तः ॥

---

No. **12847.** कुवलयानन्दः.

KUVALAYĀNANDAḤ.

Substance, palm-leaf. Size, $15\frac{3}{4} \times 1\frac{1}{2}$ inches. Pages, 66. Lines, 5 on a page. Character, Telugu. Condition, injured. Appearance, new.

Breaks off in the Parikaralaṅkāra.

Same work as the above.

## No. 12848. कुवलयानन्दः.
## KUVALAYĀNANDAḤ.

Substance, palm-leaf. Size, 15¾ × 1¼ inches. Pages, 118. Lines, 6 on a page. Character, Telugu. Condition, fair. Appearance, old.

Breaks of in the Gūḍhōktyalaṅkāra.

Same work as the above.

---

## No. 12849. कुवलयानन्दः.
## KUVALAYĀNANDAḤ.

Substance. palm-leaf. Size, 16¼ × 1¼ inches. Pages, 108. Lines, 7 on a page. Character. Grantha. Condition. fair. Appearance, old.

Breaks off in the Hētvalaṅkāra.

Same work as the above.

---

## No. 12850. कुवलयानन्दः.
## KUVALAYĀNANDAḤ.

Substance, palm-leaf. Size, 19 × 1¼ inches. Pages, 48. Lines, 8 on a page. Character, Grantha. Condition, good. Appearance, new.

Breaks off in the Vyājastutyalaṅkāra.

Same work as the above.

---

## No. 12851. कुवलयानन्दः.
## KUVALAYĀNANDAḤ.

Substance, palm leaf. Size, 18⅔ × 1½ inches. Pages, 136. Lines, 6 on a page. Character, Telugu. Condition, injured. Appearance, old.

Complete.

Same work as the above.

The scribe writes—

श्रीविलम्बितुलाकृष्णद्वादशीषु शुभे बुधे ।
लिखित्वापूरयं प्रीत्या लिख्यमानमिदं मुदा ॥
श्रीगोपीरमणस्येदं विष्णोर्लक्ष्मीनिवासिनः ।
संतोषायालिखं श्रीमान् पुत्रो विजयसारथेः ॥

---

## No. 12852. कुवलयानन्दः.
## KUVALAYĀNANDAḤ.

Substance, palm-leaf. Size, 17¾ × 1¼ inches. Pages, 208. Lines, 5 on a page. Character, Nandināgarī. Condition, injured. Appearance, old.

Contains up to the end of the Paryāyōkti.

Same work as the above.

No. **12853.** कुवलयानन्दः.
KUVALAYĀNANDAḤ.

Substance, palm-leaf. Size, $17\frac{7}{8} \times 1\frac{3}{8}$ inches. Pages, 53. Lines, 12 on a page. Character, Grantha. Condition, injured. Appearance, old.

Almost complete.

Same work as the above.

---

No. **12854.** कुवलयानन्दः.
KUVALAYĀNANDAḤ.

Pages, 114. Lines, 10 on a page.

Begins on fol. 32*a* of the MS. described under No. 11977.

Complete.

Same work as the above.

Copying was finished on Saturday, the 10th day of Caitra Śukla in the year Raktākṣi.

---

No. **12855.** कुवलयानन्दः.
KUVALAYĀNANDAḤ.

Substance, palm-leaf. Size, $14\frac{1}{4} \times 1\frac{1}{4}$ inches. Pages, 196. Lines, 5 on a page. Character, Telugu. Condition, injured. Appearance, old.

Complete.

Same work as the above.

Foll. 99 to 108 contain a duplicate copy of a portion of the work which breaks off in the भ्रान्तिमदलंकार.

---

No. **12856.** कुवलयानन्दः.
KUVALAYĀNANDAḤ.

Substance, palm-leaf. Size, $12\frac{1}{8} \times 1\frac{1}{4}$ inches. Pages, 198. Lines, 5 on a a page. Character, Telugu. Condition, injured. Appearance, old.

Breaks off in the Vikasvarālaṅkāra.

Same work as the above.

---

No. **12857.** कुवलयानन्दः.
KUVALAYĀNANDAḤ.

Substance, palm-leaf. Size, $13\frac{3}{4} \times 1\frac{1}{4}$ inches. Pages, 132. Lines, 6 on a page. Character, Telugu Condition, slightly injured. Appearance, old.

Begins on fol. 1*a*. The other work herein is Garuḍadaṇḍaka 67*a*.

Complete.

Same work as the above.

Copying was finished on the 5th day of Margaśira Śukla in the year Prajōtpatti by Kōṭagiri Veṅkaṇṇagāru.

---

No. 12858. कुवलयानन्दः.

KUVALAYĀNANDAḤ.

Substance, palm-leaf. Size, 17¾ × 1¼ inches. Pages, 76. Lines, 9 on a page. Character, Grantha. Condition, much injured. Appearance, old.

Begins on fol. 69*a*. The other work herein is Daśarūpaka 1*a*.

Complete.

Same work as the above, but an index of the Alaṅkāras is given.

---

No. 12859. कुवलयानन्दः.

KUVALAYĀNANDAḤ.

Substance, palm-leaf (Śrītāla) Size, 11 × 1½ inches. Pages, 160. Lines, 8 on a page. Character, Malayāḷam Condition, slightly injured. Appearance, new.

Breaks off in the Pramāṇālaṅkāra

Same work as the above.

---

No. 12860. कुवलयानन्दः.

KUVALAYĀNANDAḤ.

Substance, palm-leaf. Size, 12½ × 1 inches. Pages, 72. Lines, 6 on a page. Character, Telugu. Condition, injured Appearance, old.

The codex contains the stanzas of the Candrālōka as well as those quoted by Appayadīkṣita in illustration of the Alaṅkāras treated of therein. At the end of the Alaṅkāras of the Candrālōka, the Kuvalayānanda portion is copied completely In the beginning the following additional stanzas are given :—

(रा)केन्दुशङ्खनिभसन्नहना विपञ्चीं तालस्तनोपरि निधाय विनोदयन्ती ।
कञ्जानना कररुहैः कमनीयभूषा वाग्देवता वसतु मे वदने मदम्बा ॥

सा भारती ल(र)सद(नर)ङ्गलसत्प्रदेशे नाट्यं तनोतु नितरां नटिनीव बाला ।
यामात्मभूसहचरीं शरदिन्दुकान्तनीहारसन्निभतनुं नितरां नमामि ॥

No. **12861.** कुवलयानन्दः.
KUVALAYĀNANDAḤ.

Pages, 98. Lines, 8 on a page.

Begins on fol. 1*a* of the MS. described under 10940.

Almost complete.

Same work as the above.

---

No. **12862.** कुवलयानन्दः—अलंकारचन्द्रिकाव्याख्यासहितः.
KUVALAYĀNANDAḤ WITH THE COMMENTARY ALAṄKĀRACANDRIKĀ.

Substance, paper. Size, 11¼ × 4⅔ inches. Pages, 350. Lines, 10 on a page. Character, Dēvanāgarī. Condition, good. Appearance, new.

Complete.

The text is the same as that described above. It is followed by a commentary thereon called Alaṅkāracandrikā by Vaidyanātha, son of Tatsat Rāmabhaṭṭa. Lithographed at Poona in Śaka 1768. At the end an index of the names of Alaṅkāras with pages is given.

**Beginning :**

अमरीकबरीभारभ्रमरीमुखरीकृतम् ।
दूरीकरोतु दुरितं गौरीचरणपङ्कजम् ॥
परस्परतपस्संपत्फलायितपरस्परौ ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥
उद्घाट्य योगकलया हृदयाब्जकोशं धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।
यः प्रस्फुरत्यविरतं परिपूर्णरूपः श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः ॥

* * * *

अनुचिन्त्य महालक्ष्मीं हरिलोचनचन्द्रिकाम् ।
कुर्वे कुवलयानन्दसदलंकारचन्द्रिकाम् ॥

चिकीर्षिताविघ्नसिद्ध्यै इष्टदेवतां स्तौति—अमरीति । अत्र चरणमेव पङ्कजमिति मयूरव्यंसकादिसमासाश्रयणात्परिणामालङ्कारः । चरणे आरोप्यमाणस्य पङ्कजस्यारोपविषयचरणात्मना परिणतिं विना दुरितदूरीकरणक्रियार्थत्वासंभवात्; परिणामः क्रियार्थश्चेद्विषयी विषयात्मनेति तल्लक्षणात् । नच पङ्कजमिव चरणमिति पूर्वपदार्थप्रधान उपमितसमास एवास्तीति शङ्क्यम्, अमरीणां कबरीभारस्य केशपाशस्य संबन्धिनी सौगन्ध्यलोभात् तत्संसृष्टा या भ्रमरी तया मुखरीकृतमिति विशेषणस्यानुगुण्याभावात्; तस्य पङ्कजगतत्वेनैव प्रसिद्धेरिति । एत-

द्विशेषणावगतेन च पादपतनेनाभिव्यज्यमानगौरीविषया सुराङ्गनागता रतिः कवि-
गतां तां पुष्णातीति प्रेयोऽलङ्कारोऽपि बोध्यः ।

स्वकीर्त्यनुवृत्तये ग्रन्थनाम स्वनाम चोपनिबध्नन् ग्रन्थपूर्तिमनुवदति—
अमुमिति । स्वग्रन्थस्य प्रामाणिकत्वं सूचयितुमाह—चन्द्रालोक इति । शर-
दागमसंज्ञकश्चन्द्रालोकमूलभूतो ग्रन्थः । शरत्कालागमनेन चन्द्रस्यालोक इति
श्लेषः । तस्माच्च कुवलयानन्दः स्वग्रन्थोऽभूत् कुवलयस्य कुमुदस्यानन्द इति च
श्लेष इति शिवमास्ताम् ॥

विद्वद्वृन्दमहामान्यरामचन्द्रात्मजन्मना ।
विदुषा वैद्यनाथेन कृतालंकारचन्द्रिका ॥
एनां कुवलयानन्दप्रकाशनविशारदाम् ।
विदांकुर्वन्तु विद्वांसः काव्यतत्त्वविदां वराः ॥
असौ कुवलयानन्दश्चन्द्रालोकोत्थितोऽपि सन् ।
प्रतिष्ठां लभते नैव विनालंकारचन्द्रिकाम्

**Colophon:**

इति श्रीमत्पदवाक्यप्रमाणज्ञतत्सद्रामभट्टात्मजवैद्यनाथकृतालंकारचन्द्रिका-
ख्या कुवलयानन्दटीका संपूर्णा ॥

Date of lithography :

अष्टर्तुसप्तेन्दुमिते शाके पूर्णाख्यपत्तने ।
यत्नतः पाठशालायामङ्कितोऽयं शिलाक्षरैः ॥

---

No. **12863.** कुवलयानन्दव्याख्या—अलङ्कारचन्द्रिका.

KUVALAYĀNANDAVYĀKHYĀ : ALAṄKĀRA-CANDRIKĀ.

Substance, palm-leaf. Size, $18\frac{1}{2} \times 1\frac{5}{8}$ inches. Pages, 205. Lines, 13 on a page. Character, Telugu. Condition, good. Appearance, new. Complete.

Same commentary as the above

---

No. **12864.** कुवलयानन्दव्याख्या—अलङ्कारचन्द्रिका.

KUVALAYĀNANDAVYĀKHYĀ : ALAṄKĀRA-CANDRIKĀ.

Substance, palm-leaf. Size, $17\frac{1}{2} \times 1\frac{1}{2}$ inches. Pages, 73. Lines, 7 on a page. Character, Telugu. Condition, fair. Appearance, old.

Begins on fol. 1*a*. The other work herein is Bhâmatīvyākhyā: Vēdāntakalpataru 38*a*.

Begins in the course of Aprastutapraśaṁsā and extends to the end of the work.

Same work as the above

No. 12865. कुवलयानन्दव्याख्या—अलङ्कारचन्द्रिका.
KUVALAYĀNANDAVYĀKHYĀ: ALAṄKĀRA-CANDRIKĀ.

Pages, 241. Lines, 22 on a page.

Begins on fol. 1*a* of the MS. described under No. 11904

Breaks off in the Chēkōktyalaṅkāra.

Same work as the above.

No. 12866. कुवलयानन्दव्याख्या—अलङ्कारचन्द्रिका.
KUVALAYĀNANDAVYĀKHYĀ: ALAṄKĀRA-CANDRIKĀ.

Pages, 90. Lines, 7 on a page.

Begins on fol. 12*a* of the MS. described under No. 3944

Breaks off in the Atiśayōktyalankāra.

Same work as the above, but wants the introductory stanzas.

No. 12867. कुवलयानन्दव्याख्या—अलङ्कारचन्द्रिका.
KUVALAYĀNANDAVYĀKHYĀ: ALAṄKĀRA-CANDRIKĀ.

Pages, 51. Lines, 10 on a page.

Begins on fol. 1*a* of the MS. described under No. 11977.

Breaks off in the Āvṛttidīpaka

Same work as the above.

No. 12868. कुवलयानन्दव्याख्या, रसिकरञ्जनी.
KUVALAYĀNANDAVYĀKHYĀ: RASIKARAÑJANĪ.

Substance, paper. Size, 11 × 8¼ inches. Pages, 361. Lines, 18 on a page. Character, Dēvanāgarī Condition, good. Appearance, new.

Complete.

By Gaṅgādharādhvarin, who gives out the total number of works of Appayadīkṣita to be more than 100.

Same work as that described under R. No. 388 of the Triennial Catalogue of MSS., Vol. I, Part I-B.

The scribe of the original MS., from which this MS. was transcribed, adds—

खरनाम्नि हायने उत्तरायणे पक्षे श्वेते वृषभामारूढे छायानीवीमुषि महसि पूर्वाषाढनामके ऋक्षे विधातृपुटभेदननिवासभूमेः सकलविद्वज्जनसमर्चितचरणारविन्दस्य कामकोटिसुधीमणेः प्रीतिपात्रः पौत्रो भारद्वाजवंशमुक्ताफलः श्रीमद्वल्लीसहायपुत्रः श्रीमदीश्वरसूरिकृपानुबन्धी नारायणसूरिकृपावशादात्तालङ्कारशास्त्रः वेङ्कटरामनामा संख्यावान् अप्पयदीक्षितकृतकुवलयानन्दटीकां लिखित्वा संपूर्णामकरोत् ॥

## No. 12869. कुवलयानन्दव्याख्या —रसिकरञ्जनी.

## KUVALAYĀNANDAVYĀKHYĀ : RASIKARAÑJANĪ.

Substance, palm-leaf. Size, 20 × 1⅝ inches. Pages, 192. Lines, 13 on a page. Character, Grantha. Condition, slightly injured. Appearance, old.

Breaks off in the Saṅkarālaṅkāra.

Same work as the above.

## No. 12870. कुवलयानन्दव्याख्या—रसिकरञ्जनी.

## KUVALAYĀNANDAVYĀKHYĀ : RASIKARAÑJANĪ.

Substance, palm-leaf. Size, 17¼ × 1⅝ inches. Pages, 104. Lines, 7 on a page. Character, Grantha. Condition, injured. Appearance, old.

Complete.

Same work as the above.

The scribe adds—

भावाब्दे कृष्णपक्षे सवितरि च तुलाराशिगे सौम्यवारे
श्रीमत्सामगदीक्षितार्यतनयो नारायणप्रीतये ।
टीकां बालविबोधनीं कुवलयानन्दस्य सम्यङ्मुदा
प्राज्ञानां च सुपूर्णबोधविदुषः शिष्योऽलिखत्सादरम् ॥
ध्वनिप्रथितरूपकप्रथितवृत्तिभेदोज्वला
विरुद्धमतिकृन्मुखप्रकटदोषदूरा कृतिः ।
सभावरसमेदुरा सकलसज्जनानन्दनी
जगत्पतिपरः सदा रसिकरञ्जनी नृत्यतु ॥

## No. 12871. चन्द्रालोकः.
## CANDRĀLŌKAḤ.

Pages, 15. Lines, 23 on a page.

Begins on fol. 1*b* of the MS. described under No. 12846.

Written on one side of paper.

Contains the Alaṅkāramayūkha.

An easy and well-known treatise on poetics and rhetoric in ten Mayūkhas, the names of which are given below: by Jayadēva, who is the same as the author of the Prasannarāghava and the Manyālōka.

The work is divided into the following ten Mayūkhas :—

१. वाग्विचारः.
२. दोषनिरूपणम्.
३. काव्यलक्षणनिरूपणम्.
४. गुणनिरूपणम्.
५. शब्दार्थालङ्कारनिरूपणम्.
६. रसनिरूपणम्.
७. व्यञ्जनानिरूपणम्
८. मध्यमकाव्यलक्षणम्.
९. लक्षणानिरूपणम्.
१०. अभिधानिरूपणम्.

**Beginning:**

अलङ्कारेषु बालानामवगाहनसिद्धये ।
ललितः क्रियते तेषां लक्ष्यलक्षणसङ्ग्रहः ॥
उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ।
हंसीव कृष्ण ते कीर्तिः स्वर्गङ्गामवगाहते ॥

**End:**

हेतुहेतुमतोरैक्यं हेतुं केचित् प्रचक्षते ।
लक्ष्मीविलासा विदुषां कटाक्षा वेङ्कटप्रभोः ॥
इत्थं शतमलङ्कारा लक्षयित्वा निदर्शिताः ।
प्राचामाधुनिकानां च मतान्यालोच्य सर्वशः ॥

---

## No. 12872. चन्द्रालोकः.
## CANDRĀLŌKAḤ.

Pages, 10. Lines, 10 on a page.

Begins on fol. 27*a* of the MS. described under No. 11977.

Contains the Arthālaṅkāramayūkha.

Same work as the above.

The transcription of this MS. was completed by Vēṅkaṭasubbayya on the 20th of the month of Āni in the year Prajōtpatti.

---

## No. 12873. चन्द्रालोकः.
## CANDRĀLŌKAḤ.

Pages, 17. Lines, 6 on a page.

Begins on fol. 11*a* of the MS. described under No. 4180.

Contains the Arthālaṅkāramayūkha incomplete.

Same work as the above.

---

## No. 12874. चन्द्रालोकः—बुधरञ्जनीव्याख्यासहितः.
## CANDRĀLOKAḤ WITH THE COMMENTARY BUDHARAÑJANĪ.

Substance, palm-leaf. Size, 17¼ × 1½ inches. Pages, 227. Lines, 7 on a page. Character, Telugu. Condition, good. Appearance, old.

Begins on fol. 1*a*. The other works herein are Apāmārjanastōtra 115*a*, Viṣṇuhṛdaya 118*b*.

Contains the Arthālaṅkāraprakaraṇa complete.

Same work as the above, and with the commentary of Vēṅgalasūri described under R. No 1215(*b*) of the Triennial Catalogue of MSS., Vol. II, Part I-A, wherein see for the beginning.

**End:**

अत्र दानमहोत्सवायुष्करत्वनम्रविश्वासहेतुत्वादिना निर्णीते राज्ञि आयुष्य-विश्वासत्वादिवर्णितत्वात् हेतुहेतुमतोरैक्यवर्णनात्मको हेत्वलङ्कारः ॥

**Colophon:**

इति श्रीरामभूपालसभाभूषणवेङ्गलसूरिविरचितायां चन्द्रालोकव्याख्यायां बुधरञ्जनीसमाख्यायामर्थालङ्कारप्रकरणं समाप्तम् ॥

The scribe adds—

क्रोध्यब्देऽश्वयुजे कृष्णे द्वितीयायां तु पक्षके ।
भानुवारे तु मध्याह्ने लेखनात् पूरिता मया ॥
एषा सुधीभिर्विनुता रञ्जनी बुधरञ्जनी ।
श्रीमत्कावूरुवंश्येन श्रीनारायणसूनुना ॥
श्रीवेङ्कटमणाख्येन यथामातृकमेव च ।

## No. 12875. चन्द्रालोकः, बुधरञ्जनीव्याख्यासहितः.

## CANDRĀLŌKAḤ WITH THE COMMENTARY BUDHARAÑJANĪ.

Substance, palm-leaf. Size, 17⅞ × 1¾ inches. Pages, 66. Lines, 8 on a page. Character, Grantha. Condition, slightly injured. Appearance, old.

Begins on fol. 1a. The other work herein is Tarkasaṅgraha 34a.

Contains the Arthālaṅkāraprakaraṇa which breaks off in the Aprastutapraśaṁsālaṅkāra.

Same work as the above.

## No. 12876. चन्द्रालोकव्याख्या—रमा.

## CANDRĀLŌKAVYĀKHYĀ: RAMĀ.

Substance, palm-leaf. Size, 13½ × 1⅝ inches. Pages, 52. Lines, 9 on a page. Character, Grantha. Condition, injured. Appearance, old.

Begins on fol. 36a. The other works herein are Rasataraṅgiṇī 1a, Rasamañjari 23a.

Contains the Mayūkhas one to four and breaks off in the Apahnutyalaṅkāra contained in the fifth Mayūkha.

A commentary on the Candrālōka: by Pāyaguṇḍa Vaidyanātha. It is entitled Ramā. The author of the text is said to have been the son of Sumitrā and Mahādēva who was learned in the lore of sacrifices; and he calls himself Pīyūṣavarṣa Jayadēva.

**Beginning:**

उच्चैरस्यति मन्दतामरसतां जाग्रत्कलङ्कैरव-
ध्वंसं हस्तयते च या सुमनसामुल्लासिनी मानसे ।
दुष्टोद्यन्मदनाशनार्चिरमला लोकत्रयीदर्शिका
सा नेत्रत्रितयीव खण्डपरशोर्वाग्देवता दीव्यतु ॥
बृन्दावने खेलति राधया समं कर्णावतंसीकृतफुल्लपद्मः ।
रहः समालम्ब्य शरत्सुधांशुः कलङ्कितामाप स पातु माधवः ॥
नत्वा गुरुं वैद्यनाथः पायुगुण्डेतिकीर्तितः ।
व्याख्यां रमाख्यां तनुते चन्द्रालोकविलासिनीम् ॥

ग्रन्थसमाप्त्यादिप्रतिबन्धकशमनाय स्वेष्टदेवतातिरिक्तमङ्गलस्य निषिद्धतया सकलमूलभूतत्वेन समुचिततया च श्रीमद्वाग्देवतावस्तुनिर्देशादिरूपमङ्गलमाचरन् जयदेवनामा कविः शिष्यशिक्षायै व्याख्यातृश्रोतॄणामानुषङ्गतो मङ्गलाय च निबध्नाति—उच्चैरिति । सा प्रसिद्धा वर्णनीया वा वा पा देवता दीव्यतु

सर्वोत्कर्षेण वर्ततां क्रीडतां द्योततां मोदतां वेत्यन्वयार्थौ(थः) । भक्तवदने इति शेषः । केव ? खण्डपरशोः गजासुरवधे खण्डः परशुरस्य खण्डयतीति खण्डः इदृशः परशुरस्य वा तादृशस्य शिवस्य नेत्रत्रीतयीव त्रयः(त्रितये) अवयवाः यस्याः सा त्रितयी; नेत्राणां त्रितयी सूर्यचन्द्राग्निरूपा नेत्राभिन्नव्यवयवसमुदाय इवेत्यर्थः ।

* * * *

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
अनेनासावाद्यः सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ।

**Colophon:**

इति पीयूषवर्षपण्डितजयदेवविरचिते चन्द्रालोकालंकारे वाग्विचारो नाम प्रथमो मयूखः ॥

स्वादिकीर्तये आह---महादेवेति । अनेन सुकविजयदेवेन पण्डितजयदेवाख्येन

* * * *

इति पायगुण्डोपाख्यवैद्यनाथरचितायां चन्द्रालोकव्याख्यायां प्रथमो विलासः ॥

**End:**

अतथ्यमारोपयितुं तथ्यापास्तिरपह्नुतिः ।
नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम् ॥

अपह्नुतिमाह—अतथ्यमिति । तथ्यार्थप्रतिषेधपूर्वकोऽतथ्यधर्मारोपः अपह्नुतिः । निषेधपूर्वकत्वादेव रूपके नातिव्याप्तिः । उदाहरति--नायमिति । अत्रातथ्यसरोरुहत्वारोपाय विद्यमानतथ्यचन्द्रत्वनिषेधः । अस्माद्भेदान्तरमप्यन्यतोऽवगन्तव्यम् ॥

---

No. **12877.** चन्द्रालोकः, राकागमव्याख्यासहितः.

CANDRĀLŌKAḤ WITH THE COMMENTARY RĀKĀGAMA.

Substance, paper. Size, $11\frac{1}{4} \times 5\frac{3}{4}$ inches. Pages, 293. Lines, 10 on a page. Character, Dēvanāgarī. Condition, slightly injured. Appearance, old.

In the beginning two leaves are lost; otherwise complete in ten Mayūkhas.

This commentary called Rākāgama was composed by Gāgābhaṭṭa alias Viśvēśvara, son of Divākarabhaṭṭa who was a Mīmāṁsaka.

Dated : Samvat 1881, Śaka 174३, Saturday, the 10th of Māgha Śukla. By Miśranātha Rāma at Bharaṣṭāpur of the King Baladēvasiṁha

**Beginning :**

. . . चापूर्वमेवेति । यत्र कार्यवाचकपदाभावः तत्र न वाक्यार्थबोधे लिङादि-युक्तलौकिकवाक्यस्य च लक्षणया आनयनादिरूपकार्यान्वितगोरूपेऽर्थे वाक्यस्य शक्तिमवधार्यावापोद्वापाभ्यां गवादिपदस्य गोत्वादौ शक्तिमवधारयन्

* * * *

**Colophon :**

इति श्रीपीयूषवर्षपण्डितजयदेवविरचिते चन्द्रालोकालंकारे वाग्विचारो नाम प्रथमो मयूखः समाप्तः ॥

विश्वेश्वरापराख्येन गागाभट्टमनीषिणा ।
चन्द्रालोकप्रकाशोऽयं मयूखः प्रथमः कृतः ॥

इति गागाभट्टकृतचन्द्रालोकटीकायां राकागमाभिधायां प्रथमो मयूखः ॥

**End :**

जयन्ति याज्ञिकश्रीमन्महादेवाङ्गजन्मनः ।
सूक्तिपीयूषवर्षस्य जयदेवकवेर्गिरः ॥

जयदेवस्यैव पीयूषवर्ष इति नामान्तरम् । महादेव इति पूर्ववत् ॥

स्तुवतेत्व(न्त्वन्ये) ग्रन्थं कथनमिवनि(मपि वि)निन्दन्त्वपि परे
महाराजस्तुष्येदर्थ(य)मपि न तुष्येदपि परम् ।
पर . . . . . . . . विघटनसमर्थेन बहुना
श्रमेणायं तुष्येदथ जनकजा(याः)परिबृढः ॥

**Colophon :**

इति श्रीमीमांसकभट्टदिनकरसूनुविश्वेश्वरापरनामकगागाभट्टकृतचन्द्रालोके-टीकायां राकागमाख्यायां दशमो मयूखः समाप्तः ॥

The scribe adds—

संवत् १८८१ शाके १७४३ माघमासे शुक्लपक्षे तिथौ दशम्यां शनि-वासरान्वितायां लिखितं मिश्रनथुरामनिखापतशास्त्रिवेङ्कटभरष्टापुरमध्ये बलदेवसिंहराज्ये ॥

## No. 12878. चन्द्रालोकः, शरदागमव्याख्यासहितः.
## CANDRĀLŌKAḤ WITH THE COMMENTARY ŚARADĀGAMA.

**Pages**, 52. Lines, 32 on a page.

Begins on fol. 33*a* of the MS. described under No. 12786.

Complete.

This commentary on the Candrālōka, called Śaradāgama, was composed by Pradyōtanabhaṭṭācārya, son of Balabhadra. The commentary was written by the order of Prince Vīrabhadra, son of King Rāmacandra and grandson of Vīrasiṁha of Vandella family.

**Beginning:**

पृथ्वी पृथ्वी न पादान्न च वहति नभस्तुङ्गतामुत्तमाङ्गात्
पाणिप्रक्षेपयोग्यं दधति दश दिशः किं च नैवावकाशम् ।
कुर्यात् किं किं नु कुर्या त्रिपुरविजयिनस्ताण्डवे चिन्तयेत्थं
व्यग्रः स्वर्गादिहेतुस्त्रिदशगणनुतः श्रेयसे भैरवोऽस्तु ॥

मम सहजविरोधी निर्जितोऽनेन भित्त्वा
धनुरिति बहुलोद्यत्प्रीतिभाजा स्मरेण ।
स्रगिव कुवलयानामादरेणोपनीता
जयति जनकजाया राघवे दृष्टिवृष्टिः ॥

अस्य स्थितौ तु नगरी महत्ययोध्या भवत्यखिला ।
इति रघुवंशादधिको जयति वन्देल्लाभिधो वंशः ॥

देवपतेरिव शक्तिर्यस्य जये भूभृतां प्रथिता ।
श्रीवीरसिंहदेवस्तत्र धराखण्डलो जातः ॥

दशरथतो रघुपतिरिव तस्मादिह वीरभानुभूपालः ।
आबद्धधर्मसेतुर्जगति समुद्रे समुद्भूतः ॥

तत्तनयोऽमलकीर्ति(प्रसृत)स्वर्निम्नगाकूलः ।
श्रीरामचन्द्रदेवो दूषणहन्ता समुल्लसति ॥

श्रीवीररुद्रदेवो वैरिवधूगीतसत्कीर्तिः ।
जयति तदीयस्तनयः कविगोष्ठीदैवतारामः ॥

क्रियते तस्य निदेशाच्चन्द्रालोकप्रकाशोऽयम् ।
शरदागम इति विदितो भट्टा(ट्टा)चार्येण यत्नेन ॥

विघ्नविध्वंसकामनया कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—उच्चैरिति ।

उच्चैरस्यति मन्दतामरसतां जाग्रत्कलङ्कैरव-
ध्वंसं हस्तयते च या सुमनसामुल्लासिनी मानसे ।

दृष्टोद्यन्मदनाशनाश्चिरमला लोकत्रयीदर्शिका
सा नेत्रत्रितयीव खण्डपरशोर्वाग्देवता दीव्यतु ।

महारुद्रनेत्रपक्षे सूर्यरूपं चक्षुः मन्दतामरसतामुच्चैरस्यति; सूर्यस्य तामरसाह्लादकत्वात् तस्मिन् सति तामरसे मन्दत्वासंभवात् । चन्द्रात्मकचक्षुर्जाग्रत्कलं यथा स्यात् तथा कैरवध्वंसं हस्तयते दूरीकरोति । चन्द्रे सति कुमुदाह्लादस्य जायमानत्वात् ।

* * * *

हं हो चिन्मयचित्रचन्द्रमणयः संवर्धयध्वं रसान्
रे रे स्वैरिणि निर्विचारकविते मास्मत् प्रकाशीभव ।
उल्लासाय विचारवीचिनिचयालंकारवारांनिधे-
श्चन्द्रालोकमयं स्वयं वितनुते पीयूषवर्षः कृती ॥

चिन्मयाः ज्ञानशालिनो ये तेषां चित्रस्वरूपाश्चन्द्रमणयः रसान् संवर्धयध्वम् । निर्विचारकविते स्वैरिणि नानाजनसाधारणत्वात् अस्मत् प्रकाशीभव मा ।

* * * *

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
अनेनासावाद्यः सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥

**Colophon:**

इति चन्द्रालोके प्रथमो मयूखः संपूर्णः ॥

**End:**

पीयूषवर्षप्रभवं चन्द्रालोकं मनोहरम् ।
सुधानिधानमासाद्य श्रयध्वं विबुधा मुदं ॥

पीयूषेति । सुधाया निधानं तत्रायं चन्द्रालोकग्रन्थं मनोहरमित्यादिरर्थः ॥

जयन्ति याज्ञिकश्रीमन्महादेवाङ्गजन्मनः ।
सूक्तिपीयूषवर्षस्य जयदेवकवेर्गिरः ॥

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
प्रणीतस्तेनासौ सुकविजयदेवेन रचित-
श्चिरं चन्द्रालोकः सुखयतु मयूखैर्दश दिशः ।

श्रीवीरभद्रदेवेन भूदेवामरशाखिना ।
यशोदागर्भरत्नेन यत्नेनेदं विनिर्मितम् ॥

* * * *

श्रीवीरभद्रभूपतिलब्धनिदेशेन यत्नेन ।
चन्द्रालोकमयूखो दशमः स्पष्टार्थतां नीतः ॥

**Colophon**:

इति श्रीमहाराजाधिराजश्रीरामचन्द्रदेवात्मजयुवराजश्रीवीरभद्रदेवादिष्टमिश्र-श्रीबलभद्रात्मजसकलशास्त्रारविन्दप्रद्योतनभट्टाचार्यविरचिते चन्द्रालोकप्रकाशे शरदागमे दशमो मयूखः संपूर्णः ॥

ग्रन्थश्चायं समाप्तः ॥

The scribe adds—

चेदधिवमिते वर्षे कलौ तारणचैत्रजे ।
दर्शे व्यलेखि नावल्पाकं देशिकविपश्चिता ॥

---

No. 12879. चित्रमीमांसा.

CITRAMĪMĀṀSĀ.

Substance, palm-leaf. Size, $15\frac{3}{8} \times 1\frac{1}{4}$ inches. Pages, 118. Lines, 8 on a page. Character, Telugu. Condition, injured. Appearance, old.

Contains to the end of the Atiśayōktyalaṅkāra.

By Appayadīkṣita. Same work as that described under No 34 on pages 82, and 228 to 230 of M. Seshagiri Sastri's Report on a Search for Sanskrit and Tamil Manuscripts, No 2.

---

No. 12880. चित्रमीमांसा.

CITRAMĪMĀṀSĀ.

Substance, palm-leaf. Size, $17 \times 1\frac{3}{8}$ inches. Pages, 108. Lines, 9 on a page. Character, Grantha. Condition, slightly injured. Appearance, old.

Contains to the end of the Utprēkṣālaṅkāra.

Same work as the above.

---

No. 12881. चित्रमीमांसा.

CITRAMĪMĀṀSĀ.

Pages, 125. Lines 18 on a page.

Begins on fol. 177*b* of the MS. described under No. 11886.

Breaks off in the Utprēkṣalaṅkāra.

Same work as the above.

## No. 12882. चित्रमीमांसा.
## CITRAMĪMĀṀSĀ.

Substance, palm-leaf. Size, $18\frac{3}{4} \times 1\frac{5}{8}$ inches. Pages, 62. Lines, 7 on a page. Character, Telugu. Condition, injured. Appearance, not new.

Breaks off in the Sandēhālaṅkāra.

Same work as the above.

Copied by Sarvepalli Śēṣappa.

---

## No. 12883. चित्रमीमांसा.
## CITRAMĪMĀṀSĀ.

Substance, palm-leaf. Size, $16\frac{5}{8} \times 1\frac{3}{8}$ inches. Pages, 67. Lines, 7 on a page. Character, Grantha. Condition, much injured. Appearance, old.

Breaks off in the Rūpakālaṅkāra.

Same work as the above.

---

## No. 12884. चित्रमीमांसाव्याख्या—सुधा.
## CITRAMĪMĀṀSĀVYĀKHYĀ : SUDHĀ.

Pages, 462. Lines, 8 on a page.

Begins on fol. 1*a* of the MS. described under No. 12441.

Contains to the end of the Atiśayōktyalaṅkāra.

A commentary entitled Sudhā on the Citramīmāṁsā of Appayadīkṣita described above, by Dharānanda, son of Rāmabala of Vāsiṣṭhagōtra and grandson of Ṭhākura who had, besides the author's father, two other sons, viz., Pūrṇadāsa and Dēvadāsa. The author is said to have been the disciple of Paramānanda and born in Bharatapura. This commentator is the same as that on the Mṛcchakaṭikā (vide No. 12625). In the first leaf a portion of Citramīmāṁsā is found written.

**Beginning :**

यदर्धाङ्गं नारी विलसति परा कान्तिरुचिरा
पराङ्गं पुंरूपं जयति च जटाजूटरुचिरम् ।
सदा शृङ्गारित्व वहति वपुषैवं त्रिभुवने
नमस्तस्मै कस्मैचिदखिलविवर्ताय महसे ॥
नत्वा गुरुं कृपासिन्धुं पित्रोश्च चरणद्वयम् ।
करोमि चित्रमीमांसाव्याख्यां विद्वन्मुदे सुधाम् ॥

ज्ञात्वा मया विरचितं स्फुटलक्षणानामर्थं यथामति गभीरतरं स्वबुद्ध्या ।
व्याख्या कृता यदिह कोऽपि सदोषता स्यात् तत्रापि भूषणकृतिः सुधियां [विधेया ॥

तत्रार्थचित्रमीमांसां करिष्यमाणोऽप्पयदीक्षितः प्रारिप्सितप्रतिबन्धकविघ्नविघाताय " शब्दस्वरूपमखिलं धत्ते शर्वस्य वल्लभा । अर्थस्वरूपमखिलं धत्ते बालेन्दुशेखरः ॥ " इत्यादिनोक्तरूपं शिवयोरनुसन्धानात्मकं मङ्गलं विरचयन् स्वकीयग्रन्थस्य नाम निबध्नन् प्रतिजानीते—अभिवन्द्येति । चन्द्रशेखरमभिवन्द्य अर्थचित्रमीमांसामहं वितनोमीत्यन्वयः ।

* * * *

अथ निरूपणीयानामलङ्काराणामाश्रयभूतं यत्काव्यं तस्य विभागमाह—त्रिविधमिति । तावदिति प्राथम्येऽव्ययं वाक्यालङ्कारे वा । काव्यं लोकोत्तरवर्णनानिपुणस्य कवेरसाधारणं वर्णनात्मकं कर्म । तत् ध्वनिगुणीभूतव्यङ्ग्यचित्रभेदात् त्रिविधमित्यनुषङ्ग ।

* * * *

यथा—दिव्यहरेर्मुखकुहरे विस्तीर्णे पर्णति व्योम । अत्र वर्ण्यस्योपमेयस्य गगनापेक्षया हीनपरिमाणत्वेऽपि नृसिंहमुखपरिणाहवर्णन एव तात्पर्यात्तस्य न दोषत्वमित्याद्यूह्यम् । एतदन्तःकृत्याह—अन्येऽपीति । प्रकारा भेदा विचारणीया इत्यलम् ।

धरानन्देन रचितोपमाव्याख्यानसङ्ग्रहः ।
टीकायां चित्रमीमांसासुधायामाप पूर्णताम् ॥

**Colophon:**

इति वसिष्ठगोत्रीयमिश्ररामबलस्य सुतेन धरानन्देन रचितायां चित्रमीमांसाटीकायां सुधाख्यायामुपमालङ्कारप्रकरणव्याख्या समाप्तिमगमत् ।

**End:**

भगवद्वियोगदुःखचिन्ताह्लादौ प्रतीयेते इति निगीर्याध्यवसानरूपातिशयोक्तिद्वयप्रतीतेर्व्यङ्ग्यस्य सत्त्वात् इयमतिशयोक्तिः । श्रुतिस्मृत्योरपि " द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ " " या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ " इत्यादौ स्पष्टत्वादिति सर्वं शिवम् ॥

धरानन्देन रचितातिशयोक्त्यर्थबोधिनी ।
व्याख्यार्थचित्रमीमांसासुधायामाप पूर्णताम् ॥

वसिष्ठगोत्रजातस्य ठाकुरस्य सुतास्त्रयः ।
पूर्णदासो रामबलो देवीदासश्च विश्रुताः ॥
लब्धजन्मा रामबलाद्द्वयोरपि कृपायुतः ।
श्रीगुरोः परमानन्दाल्लब्धेष्टो भरते परे ॥
आस्ते नाम्ना धरानन्दो मारुतेः पदसंस्थितः ।
तेनेयं चित्रमीमांसासुधाव्याख्या प्रकाशिता ॥
यावद्वेदादिविद्या जगति विजयते सन्मनुष्यप्रचारा
यावद्भागीरथीयं त्रिपुरहरजटाजूटमध्ये चकास्ति ।
यावच्छेषः फणाग्रे वहति वसुमतीं भास्करेन्दुप्रकाशां
तावद्व्याख्या सुधाख्या विलसतु भुवने प्रीतये सज्जनानाम् ॥

**Colophon:**

इति श्रीचित्रमीमांसाव्याख्या सुधाख्या पूर्णतामगमत् ॥

---

No. **12885.** चित्रमीमांसाव्याख्या—सुधा.

CITRAMĪMĀṀSĀVYĀKHYĀ: SUDHĀ.

Substance, palm-leaf. Size, 15¾ × 1⅝ inches. Pages, 14. Lines, 5 on a page. Character, Telugu. Condition, good. Appearance, new.

Breaks off in the Upamālaṅkāra.

Same work as the above.

---

No. **12886.** चित्रमीमांसाव्याख्या—सुधा.

CITRAMĪMĀṀSĀVYĀKHYĀ: SUDHĀ.

Pages, 74. Lines, 36 on a page.

Begins on fol. 59*a* of the MS. described under No. 12786

Wants the beginning in the Rūpakālaṅkāra; otherwise complete.

Same work as the above.

**Colophon:**

इति श्रीमहामहोपाध्यायधरानन्दपण्डितविरचिता चित्रमीमांसाव्याख्या सुधाख्या सम्पूर्णा ॥

The scribe adds—

वेदीजयमिते (१८८४) हूणशके मार्चिजवासरे ।
चतुर्विंशेऽलिखन्नावल्पाकदेशिककोविदः ॥

## No. 12887. दशरूपकम्.
## DAŚARŪPAKAM.

Pages, 50. Lines, 8 on a page.

Begins on fol. 3'5b of the MS. described under No. 12441.

Complete.

A work giving the principles and characteristics of the ten different kinds of dramatic composition and of the various parts thereof.

The author is Dhanañjaya, son of Viṣṇu and a pandit in the court of King Muñjarāja. The work is divided into four Prakāśas, the names of which are given below :—

| | |
|---|---|
| १. वस्तुविभागः. | ३. रूपकलक्षणप्रकाशः. |
| २. नेतृविचारः. | ४. रसभावादिप्रकाशः. |

It has been printed along with the commentary of Dhanika. An English translation has also been published by Dr. Haas.

**Beginning :**

नमस्तस्मै गणेशाय यत्कण्ठः पुष्करायते ।
मदाभोगघनध्वानो नीलकण्ठस्य ताण्डवे ॥
दशरूपानुकारेण यस्य माद्यन्ति भावु(व)काः ।
नमः सर्वविदे तस्मै विष्णवे भरताय च ॥
कस्य चिदेव कदाचिद्दयया विषयं सरस्वती विदुषः ।
घटयति कमपि तमन्यो व्रजति जनो येन वैदग्धीम् ॥
उद्धृत्योद्धृत्य सारं यमखिलनिगमाना(न्ना)ट्यवेदं विरिञ्चिः
चक्रे यस्य प्रयोगं मुनिरपि भरतस्ताण्डवं नीलकण्ठः ।
शर्वाणी लास्यमस्य प्रतिपदमपरं लक्ष्म कः कर्तुमीष्टे
नाट्यानां किं तु किञ्चित्प्रगुणरचनया लक्षणं संक्षिपामि ॥
व्याकीर्णे मन्दबुद्धीनां जायते मतिविभ्रमः ।
तस्यार्थस्तत्पदैरेव संक्षिप्य क्रियतेऽञ्जसा ॥

* * * *

नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवाकारौ वीथ्यङ्केहामृगा इति ॥
अन्यद्भावाश्रयं नृत्यं नृत्तं ताललयाश्रयम् ।
आद्यं पदार्थाभिनयो मार्गो देशी तथा परम् ॥

* * * *

**Colophon** :

इति श्रीविष्णुसूनोर्धनिकस्य दशरूपके प्रथमः प्रकाशः ॥

**End:**

षट्त्रिंशद्भूषणादीनि सामादीन्येकविंशतिः ।
लज्जा(क्ष्य)सन्ध्यन्तराख्याति(नि)सालङ्कारेषु तेषु च ॥
रम्यं जुगुप्सितमुदारमथापि नीचमुग्रं प्रसादि गहनं विकृतं च वस्तु ।
यद्वाप्यवस्तु कविभावकभाव्यमानं तन्नास्ति यन्न रसभावमुपैति लोके ॥
विष्णोः सुतेनापि धनञ्जयेन विद्वन्मनोरागनिबन्धहेतुः ।
आविष्कृतं मुञ्जमहीशगोष्ठीवैदग्ध्यभाजा दशरूपमेतत् ॥

**Colophon :**

इति श्रीदशरूपके नाटकरसाद्यलङ्कारे चतुर्थो भावादिप्रकाशः समाप्तः ॥

---

No. **12888.** दशरूपकम्, सव्याख्यानम्.
DAŚARŪPAKAM WITH COMMENTARY.

Pages, 136. Lines, 7 on a page.

Begins on fol. 1*a* of the MS. described under No. 12858.

Complete.

Same work as the above; and with the addition of a commentary thereon by Dhanika, son of Viṣṇu which commentary is called Daśarūpāvalōkana.

**Beginning :**

इह सदाचारं प्रमाणयताविघ्नेन प्रकरणपरिसमाप्त्यर्थं स्वाभीष्टाया देवतायाः प्रकृताभिमतयोश्च देवतयोर्नमस्कारः क्रियते कृतिना श्लोकद्वयेन—

नमस्तस्मै गणेशाय यत्कण्ठः पुष्करायते ।
मदाभोगघनध्वानो नीलकण्ठस्य ताण्डवे ॥
दशरूपानुकारेण यस्य माद्यन्ति भावु(व)काः ।
नमः सर्वविदे तस्मै विष्णवे भरताय च ॥ इति ॥

यस्य कण्ठः पुष्करायते मृदङ्गवदाचरति । मदाभोगेन घनध्वानो (निबिडध्वनिः) नीलकण्ठस्य शिवस्य ताण्डवे उद्धतनृत्ते ।

तस्मै गणेशाय नमः । अत्र खण्डश्लेषाक्षिप्यमाणोपमा(च्छाया)लङ्कारः । नीलकण्ठस्य मयूरस्य ताण्डवे मेघध्वनिर्यथा पुष्करायत इति प्रतीतेः । दशरूपानुकारेणेत्येकत्र मत्स्यकूर्मादिप्रतिमारूपेण अपरत्र (अनु)कृतिरूपेण नाटकादिना

यस्य भावु(व)का ध्यातारो रसिकाश्च (माद्यन्ति) तस्मै अभिमताय प्रस्तुताय विष्णवे भरताय च नमः । श्रोतुः प्रवृत्तिनिमित्तं दर्शयति—

कस्य चिदेव कदाचिद्दयया विषयं सरस्वती विदुषः ।
घटयति कमपि तमन्यो व्रजति जनो येन वैदग्ध्यम् ॥ इति ।

* * * *

उपसंहरति—

इत्याद्यशेषमिह वस्तुविभेदजातं रामायणादि च विभाव्य बृहत्कथां च ।
आसूत्रयेत्तदनु नेतृरसानुगुण्याच्चित्रां कथामुचितचारुवचःप्रपञ्चम् ॥

स्पष्टम् ।

**Colophon:**

इति दशरूपावलोकने धनिककृते वस्तुविभागो नाम प्रथमः प्रकाशः ॥

**End:**

षट्त्रिंशत्काव्यलक्षणानि साम भेदः प्रदानं चेत्येवमादीनि सन्ध्यन्तराण्येकविंशतिरुपमादिष्वलङ्कारेषु च हर्षोत्साहादिषु चान्तर्भावान्नात्र पृथगुक्तानि । इति ।

रम्यं जुगुप्सितमुदारमथापि नीचमुग्रं प्रसाद(दि गह)नं विकृतं च वस्तु ।
यद्वाप्यवस्तु कविभावकभाव्यमानं तन्नास्ति यन्न रसभावमुपैति लोके ॥
विष्णोः सुतेनापि धनञ्जयेन विद्वन्मनोरागनिबद्धहेतुः ।
आविष्कृतं मुञ्जमहीशगोष्ठीवैदग्ध्यभाजा दशरूपमेतत् ॥

**Colophon:**

इति श्रीविष्णुसूनोर्धनिकस्य कृतौ दशरूपावलोकने रसविभागश्चतुर्थः ॥
समाप्तमिदं दशरूपावलोकनम् ॥

---

## No. 12889. दशरूपकम्, सव्याख्यानम्.
## DAŚARŪPAKAM WITH COMMENTARY.

Substance, palm-leaf. Size, 13⅝ × 1¼ and 14¾ × 1¼ inches. Pages, 146. Lines, 6 on a page. Character, Grantha. Condition, good. Appearance, new.

Breaks off in the third Prakāśa.

Same work as the above.

No. **12890.** दशरूपकम्, सव्याख्यानम्.

DAŚARŪPAKAM WITH COMMENTARY.

**Pages,** 160. Lines, 8 on a page.

**Begins** on fol. 1*a* of the MS. described under **No. 11254.**

**Complete.**

Same work as the above.

---

No. **12891.** दशरूपकम्, सटीकम्.

DAŚARŪPAKAM WITH MEANING.

**Pages,** 4. Lines, 7 on a page.

Begins on fol. 30*a* of the MS. described under No. 12789.

Contains a few stanzas chiefly from the second Prakāśa of the Daśarūpaka, with notes mostly taken from the Daśarūpāvalōkana.

**Beginning:**

दशरूपके २ प्रकाशे नायकगुणाः —

नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः ।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥

नेता नायकः । स च विनयादिगुणसंपन्नः । मधुरः प्रियदर्शनः । त्यागी सर्वस्वदाता । दक्षः शीघ्रकारी । रूढवंशः प्रख्यातकुलः । स्थिरः वाङ्मनःक्रियास्वचञ्चलः, आरब्धनिर्वाहक इति यावत् ।

**End:**

सुकुमारोऽङ्गविन्यासो मसृणो ललितं भवेत् ।
प्राप्तकालं न यद्ब्रूयाद्व्रीडया विहृतं हि तत् ॥
आनन्दनिष्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः ।
योऽपीतिहासादिवदाह साधुस्तस्मै न(मः) स्वादुपराङ्मुखाय ॥

**Colophon:**

इति दशरूपकं समाप्तम् ॥

---

No. **12892.** दशरूपकविवरणम्.

DAŚARŪPAKAVIVARAṆAM.

**Pages,** 15. Lines, 7 on a page.

Begins on fol. 1*a* of the MS. described under No. 12630.

Complete.

This work is not, as its name may imply, a commentary on Dhanañjaya's Daśarūpaka; but it is a short treatise, mostly in the nature of a compilation, explaining the characteristics and the kinds of dramatic composition. Probably it forms the Nāṭaka chapter of a comprehensive treatise on rhetoric and poetics like the Pratāparudrīya.

**Beginning:**

चतुर्विधैरभिनयैस्सात्त्विकाङ्गिकपूर्वकैः ।
धीरोदात्ताद्यवस्थानुकृतिर्नाट्यं रसाश्रयम् ॥
भावाश्रयं तु नृत्यं स्यात् नृत्तंताललयाश्रयम् ।
मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः ।
लास्यताण्डवभेदेन नाटकाद्युपकारकम् ॥

तेन नाट्येन दश रूपकाणि भवन्ति

नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवाकारौ वीथ्यङ्केहामृगा इति ॥

रूपयति दर्श(य)ति रसादिकमिति रूपकम् । नाट्याश्रयत्वेन तेषां नाभेदशङ्का ।

वस्तुनेतृरसास्तेषां रूपकाणां हि भेदकाः ।
वस्तु च त्रिविधं प्रोक्तं प्रख्यातोत्पाद्यमिश्रतः ॥
इतिहासनिबन्धं यत्प्रख्यातं तदुदाहृतम् ।
कविकल्पितमुत्पाद्यं मिश्रं सङ्कीर्णमुच्यते ॥

**End:**

अथेहामृगः —

मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिकम् ।
मर्त्यदिव्यौ चानियमान्नायकप्रतिनायकौ ॥
धीरोद्धतौ स्त्रियं दिव्यां हर्तुकामौ च कामुकीम् ।
अवधं युद्धमन्योन्यमाभासरसयोस्तयोः ॥
प्रक्रियेयं हि सकला कलिता दशरूपके ।

**Colophon:**

इति दशरूपकविवरणम् ॥

: No. **12893.** ध्वन्यालोकव्याख्यानम्—लोचनम्.

DHVANYĀLŌKAVYĀKHYĀNAM : LŌCANAM.

Substance, paper. Size, 11 × 8⅜ inches. Pages, 387. Lines, 20 on a page. Character, Dēvanāgarī. Condition, good. Appearance, new.

Complete in four Uddyōtas.

A commentary on the Dhvanyālōka (also called Kāvyālōka or Sahṛdayahṛdayālōka) of Rājānaka Ānandavardhanācārya, which is a rhetorical treatise specially dealing with Dhvani. The author of the commentary which is styled Lōcana is Abhinavaguptācārya, pupil of Bhaṭṭarājēndu. The commentator considers himself to have been purified by the dust of Siddhicēla's foot. The work Dhvanyālōka with its commentary Lōcana for Uddyōtas one to three has been printed and published in the Kāvyamāla Series.

**Beginning:**

अपूर्वं यद्वस्तु प्रथयति विना कारणकलां
जगद्ग्रावप्रख्यं निजरसभरात्स्रावयति च ।
क्रमात्प्रख्योपाख्याप्रसरसुभगं भासयति तत्
सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते ॥
भट्टेन्द्र(न्दु)राजचरणाब्जकृताधिवास-
हृद्यश्रुतोऽभिनवगुप्तपदाभिधोऽहम् ॥
यत्किञ्चिदप्यनुरणन् स्फुटयामि काव्या-
लोकं स्वलोचननियोजनया जनस्य ॥

स्वयमप्यु(व्यु)च्छिन्नपरमेश्वरनमस्कारसंपत्तिचरितार्थोऽपि व्याख्यातृश्रोतृणामपि अविघ्नेनाभीष्टश्रवणलक्षणफलसंपत्तये समुचिताशीः प्रकटनद्वारेण परमेश्वरसांमुख्यं करोति वृत्तिकारः—स्वेच्छेत्यादिना । मधुरिपोः नखाः (वः) युष्मान् व्याख्यातृश्रोतृन् त्रायन्ताम् । तेषामेव संबोधनयोग्यत्वात् । संबोधनसारो हि युष्मदर्थः । त्राणं चाभीष्टफललाभं प्रति साहायकाचरणम् । तच्च तत्प्रतिद्वन्द्विविघ्नापसारणादिना भवतीति ।

* * * *

अथ प्राधान्येनाभिधेयस्वरूपमभिदधदप्रधानतया प्रयोजनप्रयोजनं तत्सम्बन्धं प्रयोजनं च सामर्थ्यात्प्रकटयन् आदिवाक्यमाह—काव्यस्यात्मेति । काव्यात्मशब्दसंनिधानात् बुधशब्दोऽत्र काव्यात्मावबोधनिमित्तक इत्यभिप्रायेण विवृणोति—काव्यतत्त्वविद्भिरिति ।

* * * *

किं लोचनं विना लोको भाति चन्द्रिकयैव हि ।
तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात् ॥

यदुन्मीलनयुक्त्यैव विश्वमुन्मीलति क्षणात् ।
स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम् ॥

**Colophon:**

इति श्रीमहामहोपाध्यायश्रीमहामहेश्वराभिनवगुप्तोन्मीलिते सहृदयालोकलोचने ध्वनिसङ्केते प्रथम उद्द्योतः ॥

**End:**

ग्रन्थकाराः स्वनामनिबन्धनं कुर्वन्ति तदभिप्रायेणाह—आनन्दवर्धन इति। प्रथितशब्देनैतदेव प्रथितं यत्तदेव नामश्रवणं केषांचिन्निवृत्तिं करोति । यस्मात् मात्सर्यविजृम्भितं नात्र गणनीयम् । निःश्रेयसप्रयोजनादेव हि श्रुतात कोविरोध(ऽपि रागा)न्धो यदि निवर्तते किमेतावता प्रयोजनमपि अवक्तव्यमेव स्यात्। तस्मादर्थिनां प्रवृत्त्यङ्गं नाम प्रथितमिति सिद्धम् ॥

स्फुटीकृतार्थवैचित्र्यबहिःप्रसरदायिनीम् ।
तुर्यां शक्तिमहं वन्दे प्रत्यक्षार्थनिदर्शनीम् ॥

आनन्दवर्धनविवेकविकासि काव्यालोकार्थतत्त्वघटनादनुमेयसारम् ।
यत्प्रोन्मिषत्सकलसद्विषयप्रकाशिव्यापार्यताभिनवगुप्तविलोचनं तत् ॥

श्रीसिद्धिचेलचरणाब्जपरागपूतो भट्टेन्दुराजमतिसंस्कृतबुद्धिलेशम्(:) ।
काव्यप्रमाणपदवेदिगुरुप्रबन्धसेवारसो व्यरचयद् ध्वनिवस्तुवृत्तिम् ॥

सज्जनात्कविरसौ न याचते ह्लादनाय शशभृत् किमर्थिनः ।
नैव निन्दति खलान्मुहुर्मुहुः स्वीकृतोऽपि न च शीतलोऽनलः ॥

वस्तुतः शिवमये हृदि स्फुटं सर्वतः शिवमयं विराजते ।
नाशिवं क्वचन कस्यचिद्वचस्तेन वः शिवमयी दशा भवेत् ॥

**Colophon:**

इति महेश्वराभिनवगुप्तोन्मीलिते काव्यालोकलोचने चतुर्थ उद्द्योतः ॥

---

No. 12894. ध्वन्यालोकव्याख्यानम्—लोचनम्.

DHVANYĀLŌKAVYĀKHYĀNAM—LŌCANAM.

**Pages**, 24. Lines, 18 on a page.

Begins on fol. 1*a* of the MS. described under No. 3894.

Contains the fourth Uddyōta only.

Same work as the above.

No. 12895. ध्वन्यालोकलोचनव्याख्यानम्—अञ्जनम्.

DHVANYĀLŌKALŌCANAVYĀKHYĀNAM—AÑJANAM.

Substance, paper. Size, 11 × 8⅞ inches. Pages, 215. Lines, 18 on a page. Character, Dēvanāgarī. Condition, good. Appearance, new.

Contains the first Uddyōta incomplete.

A commentary on the Dhvanyālōkalōcana of Abhinavagupta described above. The name of the commentary is styled Añjana though there is no authority in the work itself for calling it so. Bhaṭṭarājēndu is herein said to be the Paramaguru (teacher's teacher) of Abhinavagupta.

**Beginning:**

एवं कृतसमुचितेष्टदेवतानुस्मरणमङ्गलः आत्मन औद्धत्यं परिहरन् परमगुरुसमनुस्मरणपुरस्सरं चिकीर्षितं प्रतिजानीते—भट्टेन्दुराजेति । अभिनवगुप्तपदाभिधोऽहं यत्किञ्चिदत्यल्पमनुरणन्नपि स्वलोचननियोजनया श्रोतृजनस्य काव्यालोकनामानं ग्रन्थं स्फुटयामि अतिगहनगम्भीरत्वेऽपि स्फुटार्थं करोमीति सम्बन्धः । नैतदसत्प्रभावादित्याह—भट्टेन्दुराजेति । भट्टेन्दुराजाख्यानां परमगुरूणां चरणाब्जयोः तत्संनिधौ कृतनिवासतया हृद्यं हृदि

* * *

वृत्तावुच्यत इत्याद्यनुसारेण आहेत्युक्तिः । तत्संबद्धमिति वा पाठः । सामान्यार्थत्वेऽपि बुधपदस्यात्र विशेषाभिधाने हेतुं वदन् अवतारयति—काव्यात्मेति । काव्यात्मशब्दयोः संनिधानादित्यर्थः । काव्यात्मनोऽवबोधः प्रवृत्तौ निमित्तं यस्य स तथा । यद्येवं काव्यात्मविद्भिरित्येव विध्रियताम् । किं तत्त्वपदेनेत्यत्राह—आत्मेति । तत्त्वशब्देनेति ।

**End:**

वाच्यस्यैवेति । मरुपान्थादिवाच्यं प्रत्येवेत्यर्थः । असत्पुरुषेति । व्यङ्ग्यविशेषस्येत्यर्थात् चमत्कृतिदायित्वमिति संबन्धः । अत्र हेतुः—शान्तेति । असत्पुरुषसेवा आलम्बनविभावः ।

---

No. 12896. नञ्जराजयशोभूषणम्.

NAÑJARĀJAYAŚŌBHŪṢAṆAM.

Substance, palm-leaf (Śrītāla). Size, 10½ × 2 inches. Pages, 354. Lines, 11 on a page. Character, Grantha. Condition, good. Appearance, old.

Complete, but breaks off in the colophon.

Same work as that described under R. No. 19 of the Triennial Catalogue of MSS., Vol. I, Part I-A. By Narasiṁhakavi.

## No. 12897. नञ्जराजयशोभूषणम्.
## NAÑJARĀJAYAŚŌBHŪṢAṆAM.

Substance, palm-leaf (Śrītāla). Size, 13¼ × 1⅞ inches. Pages, 184. Lines, 11 on a page. Character, Grantha. Condition, good. Appearance, old.

The first leaf is broken in the right side.

Complete.

Same work as the above.

## No. 12898. नञ्जराजयशोभूषणम्.
## NAÑJARĀJAYAŚŌBHŪṢAṆAM.

Substance, palm-leaf (Śrītāla). Size, 14½ × 2 inches. Pages, 290. Lines, 11 on a page. Character, Grantha. Condition, good. Appearance, old.

In the beginning four leaves are lost; otherwise complete.

Same work as the above.

Scribe's name—Śrīrāma Ayyaṅgār.

## No. 12899. नञ्जराजयशोभूषणम्.
## NAÑJARĀJAYAŚŌBHŪṢAṆAM.

Substance, palm-leaf. Size, 18 × 1⅝ inches. Pages, 119. Lines, 7 on a page. Character, Grantha. Condition, good. Appearance, old.

Breaks off in the sixth Ullāsa.

Same work as the above.

## No. 12900. नाटकचन्द्रिका.
## NĀṬAKACANDRIKĀ.

Pages, 44. Lines, 12 on a page.

Begins on fol. 69*b* of the MS. described under No. 12532.

Complete.

This work describes the characteristics of a Nāṭaka or drama and its different parts, and is the same as that described under No. 3160 of Rājēndra Lala Mitra's catalogue, Vol. IX, according to which the author is Rūpagōsvāmin. The author states that in writing this work he consulted the Bharataśāstra and the Rasasudhākara, and rejected the treatment contained in the Sāhityadarpaṇa as being opposed to Bharata's views.

**Beginning:**

वीक्ष्य भरतमुनिशास्त्रं रसपूर्वसुधाकरं च रमणीयम् ।

लक्षणमतिसंक्षेपाद्वि[illegible]ख्यते नाटकस्येदम् ॥

नातीव सङ्गतत्वात् भरतमुनेर्मतविरोधाच्च ।
साहित्यदर्पणीया न गृहीता प्रक्रिया प्रायः ॥
दिव्येन दिव्यादिव्येन तथादिव्येन वा युतम् ।

**End:**

तिस्रोऽर्थवृत्तयः प्रोक्ताः शब्दवृत्तिस्तु भारती ।
अथैतासां चतसृणां रसनैयत्यमुच्यते ॥
शान्तवीराद्भुतप्रीतिवत्सलेषु तु सात्त्वती ।
प्रेयश्शृङ्गारहास्येषु प्रोक्ता वृत्तिस्तु कौशिकी ॥
बीभत्से करुणे चारभटी वीरे भयानके ।
प्रायो रसेषु सर्वत्र भारती करुणादिषु ॥

**Colophon:**

इति नाटकचन्द्रिका समाप्ता ॥

---

## No. 12901. नायिकावर्णनम्.
## NĀYIKĀVARṆANAM.

Pages, 4. Lines, 22 on a page.

Begins on fol. 4*a* of the MS. described under No. 11981, wherein this work has been omitted to be included in the list of other works given therein.

Complete.

A short treatise, describing in 49 stanzas the qualities of a heroine in a poetic or dramatic composition: by Rāmaśarman, who intends the work for beginners.

**Beginning:**

श्रीराधाचरणाम्भोजभ्रमरीकृतमानसः ।
शुभाय भवतां कृष्णो भवतां कीर्तिसंपदे ॥
निखिलेषु रसेष्वेषु बालानां बुद्धिसिद्धये ।
नायिकावर्णनं किञ्चित् क्रियते रामशर्मणा ॥
स्वकीया परकीया च सामान्यवनिता तथा ।
गुणज्येष्ठैः कविश्रेष्ठैर्नायिका त्रिविधोच्यते ॥
स्वामिन्येवानुरक्ता स्यात् या सा स्वीया बुधैः स्मृता ।
वियोगः प्राणनाथस्य माभूत्स्वप्नेऽपि मे सखि ॥

**End:**

आनन्दो मनसि प्रमोदविगलद्बाष्पोदकं नेत्रयो-
रङ्गे कम्पसमागमो बहु(तर)स्तापः सपत्नीजने ।
स्वेदस्यापि ततिः कपोलफलके प्रान्ते यतो जायते
तद्वः संघटनं पुनातु सततं कन्दर्पचापभ्रुवा ॥
यथामति कृतं किञ्चिद्वर्णनं रामशर्मणा ।
नायिकानामिदं लोकसंतोषं कुरुतान्मम ॥

**Colophon:**

इति श्रीरामकविविरचितं नायिकावर्णनं समाप्तिमगमत् ॥

---

## No. 12902. प्रतापरुद्रीयम्.
## PRATĀPARUDRĪYAM.

Pages, 241. Lines, 25 on a page.

Begins on fol. 1*a* of the MS. described under No. 12233.

Complete. The first 126 leaves are written on one side only.

Same work as that described under No. 35 on pages 82 and 230 of M. Seshagiri Sastri's Report No. 2. By Vidyānātha. The work is also called Pratāparudrayaśōbhūṣaṇa, and it has been printed in the Bombay Sanskrit Series along with its commentary, Ratnāpaṇa.

---

## No. 12903. प्रतापरुद्रीयम्.
## PRATĀPARUDRĪYAM.

Substance, palm-leaf. Size, $17\frac{1}{4} \times 1\frac{3}{8}$ inches. Pages, 80. Lines, 7 on a page. Character, Grantha. Condition, slightly injured. Appearance, old.

Breaks off in the Guṇaprakaraṇa (sixth).

Same work as the above.

---

## No. 12904. प्रतापरुद्रीयम्.
## PRATĀPARUDRĪYAM.

Pages, 147. Lines, 7 on a page.

Begins on fol. 64*a* of the MS. described under No. 11934.

Begins in the course of the Nāṭakaprakaraṇa (third) and extends to the end of the work.

Same work as the above.

## No. 12905. प्रतापरुद्रीयम्.
## PRATĀPARUDRĪYAM

Substance, paper. Size, 12½ × 4¾ inches. Pages, 209. Lines, 9 on a page. Character, Dēvanāgarī. Condition, good. Appearance, new.

Complete.

Same work as the above.

---

## No. 12906. प्रतापरुद्रीयम्.
## PRATĀPARUDRĪYAM.

Substance, palm-leaf. Size, 18 × 1⅝ inches. Pages, 93. Lines, 8 on a page. Character, Telugu. Condition, fair. Appearance, old.

Contains the Nāyakaprakaraṇa (first), the Alaṅkāraprakaraṇa (seventh and eighth) and the Kāvyaprakaraṇa (second).

Same work as the above.

---

## No. 12907. प्रतापरुद्रीयम्.
## PRATĀPARUDRĪYAM.

Pages, 96. Lines, 7 on a page.

Begins on fol. 1*a* of the MS. described under No. 11781.

Contains up to the end of the Rasaprakaraṇa.

Same work as the above.

---

## No. 12908. प्रतापरुद्रीयम्.
## PRATĀPARUDRĪYAM.

Substance, palm-leaf. Size, 17 × 1¼ inches. Pages, 186. Lines, 7 on a page. Character, Grantha. Condition, very much injured. Appearance, old.

Breaks off in the Artbālaṅkāraprakaraṇa (eighth).

Same work as the above.

---

## No. 12909. प्रतापरुद्रीयम्.
## PRATĀPARUDRĪYAM.

Substance, palm-leaf. Size, 19 × 1½ inches. Pages, 13. Lines, 7 on a page. Character, Telugu. Condition, good. Appearance, old.

Begins on fol. 1*a*. The other work herein is Prataparudrīyavyākhyā : Ratnāpaṇa 8*a*.

Contains the Nāyakaprakaraṇa (first) complete, and the Nāṭakaprakaraṇa (third) incomplete.

Same work as the above.

No. 12910. प्रतापरुद्रीयम्.
PRATĀPARUDRĪYAM.

Substance, palm-leaf. Size, 17 × 1½ inches. Pages, 138. Lines, 6 on a page. Character, Telugu. Condition, fair. Appearance, old.

Begins on fol. 1*a*. The other work herein is Dārukāvanavilāsa 70*a*.

Complete.

Same work as the above.

No. 12911. प्रतापरुद्रीयम्.
PRATĀPARUDRĪYAM.

Substance, palm-leaf. Size, 17¼ × 1⅝ inches. Pages, 140. Lines, 6 on a page. Character, Telugu. Condition, good. Appearance, old.

Breaks off in the Arthālaṅkāraprakaraṇa (eighth).

Same work as the above.

No. 12912. प्रतापरुद्रीयम्.
PRATĀPARUDRĪYAM.

Substance, palm-leaf. Size, 16¼ × 1⅝ inches. Pages, 238. Lines, 7 on a page. Character, Grantha. Condition, injured. Appearance, old.

Complete.

Same work as the above.

No. 12913. प्रतापरुद्रीयम्.
PRATĀPARUDRĪYAM.

Substance, palm-leaf. Size, 15½ × 1⅝ inches. Pages, 150. Lines, 7 on a page. Character, Telugu. Condition, slightly injured. Appearance, old.

Contains up to the end of the Guṇaprakaraṇa (sixth).

Same work as the above.

No 12914. प्रतापरुद्रीयम्.
PRATĀPARUDRĪYAM.

Substance, palm-leaf. Size, 19 × 1⅝ inches. Pages, 28. Lines, 7 on a page. Character, Telugu. Condition, much injured. Appearance, old.

Contains the Śabdālaṅkāra (seventh) complete and the Arthālaṅkāra (eighth) incomplete.

Same work as the above.

No. **12915.** प्रतापरुद्रीयव्याख्यानम्—रत्नापणम्.

PRATĀPARUDRĪYAVYĀKHYĀNAM : RATNĀPAṆAM.

Substance, palm-leaf. Size, 14 × $\frac{7}{8}$ inches. Pages, 454. Lines, 5 on a page. Character, Telugu. Condition, good. Appearance, old.

Complete.

Same work as that described under R. No. 1143 (*a*) of the Triennial Catalogue of MSS., Vol. II, Part I-A, wherein see for the beginning. By Kumārasvāmin.

**End:**

अलंकारान्तरसंसृष्टिप्रपञ्चः प्रबन्धान्तरेषु द्रष्टव्य इत्याह—एवामिति । विवेकिनामेतावतैवेतरदपि (सु)बोधमिति विस्तरभीरुभिरस्माभिरुपरम्यते इति सर्वमवदातम् ॥

जगति निखिलविद्यासिन्धुमुष्टिंधयानां
परभणितिपरीक्षा यु(ज्यते सज्जनानाम्) ।
तदिह मम निबन्धे दूषणं भूषणं वा
भवति यदि विदग्धैस्तद्ध्यवश्यं विमृश्यम् ॥

**Colophon:**

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलचलमल्लिनाथसूरिसूनुना विश्वजनीनविद्यस्य विद्वन्मणेः पेद्दनार्यस्यानुजेन कुमारस्वामिसोमपीथिना विरचिते प्रतापरुद्रीयव्याख्याने रत्नापणाख्याने मिश्रालंकारनिरूपणं नाम नवमं प्रकरणम् ॥

---

No. **12916.** प्रतापरुद्रीयव्याख्यानम्—रत्नापणम्.

PRATĀPARUDRĪYAVYĀKHYĀNAM : RATNĀPAṆAM.

Substance, palm-leaf. Size, 17$\frac{1}{4}$ × 1$\frac{1}{4}$ inches. Pages, 285. Lines, 8 on a page. Character, Grantha. Condition, fair. Appearance, old.

Complete.

Same work as the above.

---

No. **12917.** प्रतापरुद्रीयव्याख्यानम्—रत्नापणम्.

PRATĀPARUDRĪYAVYĀKHYĀNAM : RATNĀPAṆAM.

Substance, palm-leaf. Size, 16$\frac{3}{4}$ × 1$\frac{3}{4}$ inches. Pages, 470. Lines, 6 on a page. Character, Grantha. Condition, slightly injured. Appearance, old.

Breaks off in the Miśrālaṅkāraprakaraṇa (ninth).

Same work as the above.

No. **12918.** प्रतापरुद्रीयव्याख्यानम्—रत्नापणम्.

PRATĀPARUDRĪYAVYĀKHYĀNAM: RATNĀPAṆAM.

Pages, 6. Lines, 7 on a page.

Begins on fol. 8*a* of the MS. described under No. 12909.

Contains the Nāyakaprakaraṇa (first) incomplete.

Same work as the above.

---

No. **12919.** प्रतापरुद्रीयव्याख्यानम्—रत्नापणम्.

PRATĀPARUDRĪYAVYĀKHYĀNAM: RATNĀPAṆAM.

Substance, paper. Size, $10\frac{1}{8} \times 4\frac{1}{4}$ inches. Pages, 248. Lines, 10 on a page. Character, Telugu. Condition, injured. Appearance, old.

Breaks off in the Guṇaprakaraṇa (sixth).

Same work as the above.

---

No. **12920.** भामहालङ्कारः.

BHĀMAHĀLAṄKĀRAḤ.

Substance, paper. Size, $8\frac{1}{2} \times 6\frac{3}{4}$ inches. Pages, 46. Lines, 18 on a page. Character, Telugu. Condition, good. Appearance, new.

Complete.

This is an ancient work on poetics and rhetoric by Bhāmaha, son of Rakrilagōmin. According to the first stanza of the work it is called Kāvyālaṅkāra. It deals with the following five topics in its six Paricchēdas (vide the stanza following the colophon of the sixth Paricchēda) (1) Kāvyaśarīra in 60 stanzas, (2) Alaṅkāra in 160 stanzas, (3) Dōṣa in 50 stanzas, (4) Nyāya in 70 stanzas and (5) Śabdaśuddhi in 60 stanzas. The work has been printed with the help of this MS. as an appendix to the Pratāparudrīya in the Bombay Sanskrit Series. The author is mentioned in rhetorical works generally at the top of the list of rhetoricians and is considered by some to be prior to Daṇḍin, the author of the Kāvyādarśa. Bhāmaha is referred to by Mammaṭa, Udbhaṭa, Ānandavardhana, Vidyānātha and others. He mentions Rāmaśarman, Śākavardhana, Mēdhāvin, Nyāsakāra, etc.

**Beginning:**

प्रणम्य शर्वं सर्वज्ञं मनोवाक्कायकर्मभिः ।
काव्यालङ्कार इत्येष यथाबुद्धि विधास्यते ॥
धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
प्रीतिं करोति कीर्तिं च साधुकाव्यनिबन्धनम् ॥

अधनस्येव दातृत्वं क्लीबस्येवास्त्रकौशलम् ।
अज्ञस्येव प्रगल्भत्वमकवेः शास्त्रवेदनम् ॥
विनयेन विना का श्रीः का निशा शशिना विना ।
रहिता सत्कवित्वेन कीदृशी वाग्विदग्धता ॥
गुरूपदेशादध्येतुं शास्त्रं जडधियोऽप्यलम् ।
काव्यं तु जायते जातु कस्यचित्प्रतिभावतः ॥
उपेयुषामपि दिवं सन्निबन्धविधायिनाम् ।
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः ॥

* * * *

रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ॥
शब्दार्थौ सहितौ काव्यं गद्यं पद्यं च तद्द्विधा ।
संस्कृतं प्राकृतं चान्यदपभ्रंश इति त्रिधा ॥

* * * *

**Colophon:**

इति भामहालङ्कारे प्रथमः परिच्छेदः ॥

**End:**

सालातुरीयमतमेतदनुक्रमेण को वक्ष्यतीति विरतोऽहमतो विचारात् ।
शब्दार्णवस्य यदि कश्चिदुपैति पारं भीमाम्भसश्च जलधेरिति विस्म-
[योऽसौ ॥
विद्यानां सततमपाश्रयोऽपरासां तामूक्तान्न च विरुणद्धि कांश्चिदर्थान् ।
श्रद्धेयं जगति मतं हि पाणिनीयं माध्यस्थ्याद्भवति न कस्यचित्प्रमाणम् ॥
अवलोक्य मतानि सत्कवीनामवगम्य स्वधिया च काव्यलक्ष्म ।
सुजनावगमाय भामहेन ग्रथितं रक्रिलगोमिसूनुनेदम् ॥

**Colophon:**

इति भामहालङ्कारे षष्ठः परिच्छेदः ॥

षष्ट्या शरीरं निर्णीतं शतषष्ट्या त्वलङ्कृतिः ।
पञ्चाशता दोषदृष्टिः सप्तत्या न्यायनिर्णयः ॥

षष्ठ्या शब्दस्य शुद्धिः स्यादित्येवं वस्तुपञ्चकम् ।
उक्तं षड्भिः परिच्छेदैर्भीमहेन क्रमेण वः ॥

---

## No. 12921. रसकौमुदी.
## RASAKAUMUDĪ.

Substance, paper. Size, 12¼ × 5⅜ inches. Pages, 80. Lines, 9 on a page. Character, Dēvanāgarī. Condition, slightly injured. Appearance, new.

Complete.

A work describing the characteristic features of the nine different sentiments, viz., शृङ्गार (love), हास्य (laughter), करुण (pity), रौद्र (terror), वीर (valour), भय (fear), बीभत्स (repugnance), अद्भुत (wonder), शान्त (peacefulness). The author is Ghāsī Rāmapaṇḍita.

**Beginning:**

पादाङ्काभरणं कृतं च हसितं सख्या स्वकीये कृपां
दृष्टिं वारिषु भीमवह्निसदृशीं युद्धेषु चोत्कण्ठताम् ।
यो बिभ्रन्नगभूषणं च विगलद्रक्तां कदाचित्तनू-
मर्धाङ्गीं हृदयङ्गमां च दयितां पायात्स मामीश्वरः ॥
प्रणम्य स्वगुरुं भक्त्या स्मृत्वा तातपदद्वयम् ।
स्वकीयबुद्धिबोधाय वक्ष्यामि रसकौमुदीम् ॥

तत्र रसो नाम—लौकिकविषयककारणकार्यसहकारिपर्यायाभिन्नकाव्यनाट्यप्रतिपाद्यविभावानुभावव्यभिचारिनिष्ठप्रकाशकतानिरूपितप्रकाश्यताश्रयरत्यादिरूप्यन्तःकरणवृत्त्यगम्याविद्यारहितानिर्वचनीयब्रह्मसुखाभिन्नसुखरूप्यलौकिकव्यापार एव । उक्तञ्च भरतमुनिना—विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति । स चैकोऽप्युपाधिभेदादष्टधा—शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्साद्भुतसंज्ञौ च शान्तेन नवधा क्वचित् ॥

**End:**

अथोत्थापकः—

प्रेषणं यत्परस्यादौ युद्धायोत्थापकस्तु सः ।

यथा रामः—

नृपानप्रत्यक्षान् किमपवदसे नन्वयमहं शिशुक्रीडाभग्नत्रिपुरहरधन्वा तव पुरः ।
अहंकारक्रूरार्जुनभुजवनव्रश्चनकलानिसृष्टार्थौ बाहू कथय कतरस्ते प्रहरतु ॥

अत्र रामेण प्राक् प्रहाराय प्रेरितो जामदग्न्य इति उत्थापकः ॥

**Colophon:**

इति रसकौमुदी समाप्ता ॥

The scribe adds—

ज्येष्ठशुक्लचतुर्दश्यां लिखिता समाप्ता इति ।
श्रीमत्घासीरामपण्डितविरचिता रसकौमुदी समाप्ता ॥

---

No. 12922. रसगङ्गाधरः.
RASAGAṄGĀDHARAḤ.

Substance, paper. Size, 13 × 8 inches. Pages, 244. Lines, 38 on a page. Character, Telugu. Condition, slightly injured. Appearance, old.

Complete.

Same work as that described under R. No. 830 of the Triennial Catalogue, of MSS., Vol. II, Part I-A, wherein see for the beginning. By Jagannātha Paṇḍitarāja.

**End:**

पद्यान्तर्वर्तिपद्यबहिर्वर्तिनोर्द्वयोरप्युत्तरयोस्सकृच्छब्दश्रुतिपर्यायत्वेन शब्दावृत्तिपर्यायत्वेन(ना)नेकेषां प्रश्नानामेकपदनिवेदितोत्तरत्वेन प्रकारान्तरैश्च बहुप्रभेदत्वं दिङ्मात्रेणोदाहृतं(ह्रियते)—

किं कुर्वते दरिद्राः कासारवती धरा मनोज्ञतरा ।
कोपावनस्त्रिलोक्यां (गुरुपदभाग्यासुदेतोयम्) ॥

---

No. 12923. रसगङ्गाधरः.
RASAGAṄGĀDHARAḤ.

Pages, 201. Lines, 25 on a page.

Begins on fol. 1*a* of the MS described under No. 12430.

Complete.

Same work as the above.

**Colophon:**

इति श्रीजगन्नाथपण्डितरायरचिते रसगङ्गाधरे उत्तरालङ्कारप्रकरणम् ॥

---

No. 12924. रसगङ्गाधरः.
RASAGAṄGĀDHARAḤ.

Substance, palm-leaf. Size, $15\frac{7}{8} \times 1\frac{1}{2}$ inches. Pages, 101. Lines, 8 on a page. Character, Grantha. Condition, fair. Appearance, new.

Breaks off in the Rasābhāsa.

Same work as the above.

## No. 12925. रसगङ्गाधरः.
## RASAGAṄGĀDHARAḤ.

Substance, paper. Size, 12¾ × 8 inches. Pages, 47. Lines, 31 on a page. Character, Grantha. Condition, good. Appearance, new.

Begins with the Mālārūpaka and breaks off in the Saṁśaya Alaṅkāra.

Same work as the above.

---

## No. 12926. रसगङ्गाधरः.
## RASAGAṄGĀDHARAḤ.

Pages, 13. Lines, 18 on a page.

Begins on fol. 216*a* of the MS. described under No. 11904.

Very fragmentary.

Same work as the above.

---

## No. 12927. रसचन्द्रिका.
## RASACANDRIKĀ.

Pages, 115. Lines, 9 on a page.

Begins on fol. 351*b* of the MS. described under No. 12471.

Complete.

A work describing the different classes of heroines and their characteristic qualities as well as those of their lovers: by Viśvēśvara son of Lakṣmīdhara.

**Beginning:**

तिर्यङ्मात्रप्रवणनयनोपान्तदृश्यत्वलोभा-
दन्योन्यार्धावयवघटितं स्वाङ्गमाधायि याभ्याम् ।
तौ सद्रूपावपि जनकतां जन्यमात्रे भजन्तौ
देवावाद्यौ जगति जयतः प्रेमसीमायमानौ ॥
जयति यथा जातानां वाग्जातसुजातपारिजातश्रीः ।
श्रीलक्ष्मीधरविबुधावतंसचरणाब्जरेणुकणः ॥
सारासारविचारैकपरायणहृदां सदा ।
चमत्कारप्रकाशाय क्रियते रसचन्द्रिका ॥

इह खलु नायकसमवेतायां रतौ नायिका विषयः, नायिकासमवेतायां च नायक इति विषयस्य रतावसाधारणं कारणत्वमिति तौ निरूप्येते । तत्र नियामकाभावात् ग्रन्थभेदेन पौर्वापर्यानियमदर्शनेऽपि इच्छाया एव नियामकत्वादिह बहुवक्तव्यात् प्रथमं नायिका निरूप्यते —सा त्रिविधा—स्वीया, परकीया, सामान्या चेति ।

**End :**

स्थूललक्षत्वमौदार्यम् । यथा—

प्रातर्वर्णनयानया निजवपुर्भूषाप्रसादात्तदा
देवीव(यं) परितोषितेति निहिता मा(या)न्तःपुरिक्या पुरः ।
सूता मण्डनमण्डलीं परिदधे माणिक्यरोचिर्मय:(यीं)
क्रोधावेशसरागलोचनरुचा दारिद्र्यविद्राविणीम् ॥

श्रीमन्महीमहिततत(त्त)दसीमसी(धी)ममू(न्मू)र्धन्यताकलनमङ्गतधन्यताकः ।
लक्ष्मीधरो यमुदसूत मुदं प्रसूत(तां) विश्वेश्वरस्य कृतिरस्य चिरस्य लोके ॥

**Colophon :**

इति श्रीरसचन्द्रिका समाप्ता ॥

---

### No. 12928. रसतरङ्गिणी.
### RASATARAṄGIṆĪ.

Substance, palm-leaf. Size, 18 × 1 inches. Pages, 39. Lines, 8 on a page. Character, Grantha. Condition, fair. Appearance, old.

Begins on fol. 1*a*. The other work herein is Rasamañjarī 20*b*.

Complete.

Same work as that described under R. No. 820(*b*) of the Triennial Catalogue of MSS., Vol, II. Part I-A. By Bhānudatta.

---

### No. 12929. रसतरङ्गिणी.
### RASATARAṄGIṆĪ.

Pages, 42. Lines, 10 on a page.

Begins on fol. 1*a* of the MS. described under No. 12876.

Complete.

Same work as the above.

---

### No. 12930. रसतरङ्गिणीव्याख्या—नौका.
### RASATARAṄGIṆĪVYĀKHYĀ : NAUKĀ.

Substance, palm-leaf. Size, 12¾ × 1¼ inches. Pages, 347. Lines, 8 on a page. Character, Telugu. Condition, good. Appearance, new.

Complete.

Same work as that described under No. 1215 on page 354 in the India Office Library Catalogue ; but this MS. does not contain the five stanzas with which the commentary is therein said to be concluded. It is a commentary called Naukā by Gaṅgārāmajaḍin on the Rasataraṅgiṇī described above.

**Beginning:**

लीलागृहीतगात्रं नवरसपात्रं सुतं यशोदायाः ।
श्रीभानुतरङ्गिण्या नौकायाः कर्णधारमहमीडे ॥

गङ्गारामेण मया यत्नात्कोपादिव बलरामेण ।
प्राक्प्रवणाप्यर्वाक्प्रवणासौ क्रियते तरङ्गिणी भानोः ॥

प्रारिप्सितप्रतिबन्धकदुरितविध्वंसकपटीयसीमाशिषं शिष्यशिक्षायै निबध्नन् श्रीभानुदत्तमिश्रो निरूपणीयरसस्योत्तमनायकालम्बनतया पुरुषोत्तमं परामृशति—लक्ष्मीमिति । पीतवासाः श्रीकृष्णोऽत्र । पीतवासःपदमप्युपसर्गकर्मक्तान्तेणूधातुनिष्पन्नम् अपीतानि अपहृतानि वासांसि परिधानीयानि अर्थात् गोपीनां येन सः इत्यर्थमावेदयत्तस्मिन्नेवमादिनानाविधक्रीडाविटत्वमवगमयते । सोऽयं शब्दशक्तिमूलध्वनेरध्वा । अनयैव दिशा व्युत्पत्तिभेदसहकारेण पीतवासःपदं सर्वरसानुगुणं मत्वा तदेवोपनिबद्धं ग्रन्थकृता ।

**End:**

स्वकीर्त्यनुवृत्तेर्विद्वत्परिशीलनं विना दुर्घटत्वं मन्वानस्तान् प्रार्थयते—विद्वद्वारिधरा इति । हे पण्डिताः हे वागमृतप्रयोक्तार इत्यर्थः । स्वग्रन्थोदाहरणेषु परकीयत्वाशङ्कां वारयन् देवताप्रसादाय कविर्भारतीसमधिष्ठात्रीं देवतां प्रार्थयते—अवगाहस्वेति । दिव्यां निमज्जनोन्मज्जनक्रीडाहेतुम्; गूढागूढव्यङ्ग्यामिति यावत् । स्वकीर्त्यनुवृत्तये स्वस्य ग्रन्थस्य च तां निबध्नन् स्वयशःप्रथयित्रीमेनामाशास्ते यावदिति । कापि काचन नदीव रसाद्भुता मे भानोरिति तरङ्गिणीपदप्रवृत्तिनिमित्तमुक्तमिति विरम्यते ॥

**Colophon:**

इति जड्डुपनामगङ्गारामविरचितायां नौकाख्यायां रसतरङ्गिणीव्याख्यायामष्टमस्तरङ्गः ॥

---

No. 12931. रसतरङ्गिणीव्याख्या—नौका.

RASATARAṄGIṆĪVYĀKHYĀ : NAUKĀ

Substance, paper. Size, 12 × 7¾ inches. Pages, 200. Lines, 26 on a page. Character, Telugu. Condition, fair. Appearance, old.

Complete.

**Same work as the above.**

No. 12932. रसतरङ्गिणीव्याख्या—रसिकरञ्जनी.

RASATARAṄGIṆĪVYĀKHYĀ : RASIKARAÑJANĪ.

**Pages**, 270. Lines, 8 on a page.

Begins on fol. 149*b* of the MS. described under No. 12532.

Complete.

Another commentary on the Rasataraṅgiṇī described above: by Vēṇidatta, who is mentioned in the colophon with the title Tarkavāgīśabhaṭṭācārya. His grandfather's great grandfather is stated to be Mahīdāsa.

Dated: Kārtika month, Saṃvat 1907.

**Beginning :**

नमोऽनवतमस्स्तोमतोमरोत्तमकान्तये ।
कलिताशेषकल्याणकलिकल्मषसंमुषे ॥
रुचिरतमालललामं बर्हि(णवर)बर्हशेखरं सुखदम् ।
राधाहृदयनिवासं बाधाहरमाश्रये नित्यम् ॥
प्रणम्य लक्ष्मीनृहरिं प्रत्यूहव्यूहनाशनम् ।
कुर्वे रसतरङ्गिण्या व्याख्यां रसिकरञ्जनीम् ॥

तत्राभिमतग्रन्थसमाप्तिप्रतिबन्धकविघ्नविघाताय तत्प्रतिपाद्याष्टरसरूपत्वेनेष्ट-देवतामाभिष्टवीति—लक्ष्मीमिति । पीतवासाः मां पातु पीतं वासो वस्त्रं यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । तथाच पीताम्बरो हरिरित्यर्थः ।

**End :**

मे मम भानोः भानुदत्तस्य एषा रसतरङ्गिणी पूर्णीकृतेति शिवम् ॥

*      *      *      *

तरणी रचितेन मे तथा रसतरङ्गिणी ।
रसपारगतीच्छद्भिः सुसुखं परितीर्यताम् ॥
श्रीमन्नागफणातपत्रनृहरेर्भक्तो धरामण्डले
विख्यातो महिदासभट्ट इति यस्तत्प्रसूजन्यात्मजः ।
वेणीदत्तकवीन्द्रशेखरवरः सत्तर्कवागीश्वर-
स्तस्येयं कृतिरुज्ज्वला वितनुतां मोदं सतां सर्वदा ॥

**Colophon :**

इति श्रीतर्कवागीशभट्टाचार्यवेणीदत्तकृता रसतरङ्गिणीव्याख्या रसिकरञ्जनी समाप्ता ॥

समाप्तश्चायमष्टमस्तरङ्गः ॥

## No. 12933. रसमञ्जरी.

RASAMAÑJARĪ.

Substance, paper. Size, $7\frac{3}{4} \times 5\frac{3}{4}$ inches. Pages, 23. Lines, 36 on a page. Character, Telugu. Condition, good. Appearance, new.

Complete.

Same text as that described with a commentary under R. No. 680 of the Triennial Catalogue of MSS., Vol. I, Part I-C. By Bhānudatta.

Date of transcription—Wednesday, the 5th day of the bright fortnight of the Mārgaśira month in the year Durmati, Śaka 1784.

Scribe's name—Kṛṣṇa.

---

## No. 12934. रसमञ्जरी.

RASAMAÑJARĪ.

Substance, palm-leaf. Size. $17\frac{3}{8} \times 1\frac{1}{2}$ inches. Pages, 67. Lines, 5 on a page. Character, Grantha. Condition, injured. Appearance, old.

Wants the beginning; otherwise complete.

Same work as the above.

---

## No. 12935. रसमञ्जरी.

RASAMAÑJARĪ.

Pages, 26. Lines, 8 on a page.

Begins on fol. 23*a* of the MS. described under No. 12876.

Complete.

Same work as the above.

---

## No. 12936. रसमञ्जरी.

RASAMAÑJARĪ.

Pages, 31. Lines, 6 on a page.

Begins on fol. 1*a* of the MS. described under No. 12778.

Complete.

Same work as the above.

---

## No. 12937. रसमञ्जरी.

RASAMAÑJARĪ.

Pages, 16. Lines, 8 on a page.

Begins on fol. 20*b* of the MS. described under No. 12928.

Complete.

Same work as the above.

## No 12938. रसमञ्जरी.
## RASAMAÑJARĪ.

Substance, palm-leaf. Size, 15 × 1½ inches. Pages, 18. Lines, 7 on a page. Character, Telugu. Condition, fair. Appearance, old.

Begins on fol. 87*a*. The other work herein is Rasamañjarīvyākhya : Vyṅgyārthakaumudī 1*a*.

Incomplete.

Same work as the above.

---

## No. 12939. रसमञ्जरी.
## RASAMAÑJARĪ.

Substance, palm-leaf. Size, 15½ × 1⅜ inches. Pages, 50. Lines, 5 on a page. Character, Telugu. Condition, good. Appearance, new.

Complete.

Same work as the above.

---

## No. 12940. रसमञ्जरी.
## RASAMAÑJARĪ.

Substance, palm-leaf. Size, 16 × 1⅜ inches. Pages, 46. Lines, 8 on a page. Character, Grantha. Condition, slightly injured. Appearance, old.

Complete.

Same work as the above.

---

## No. 12941. रसमञ्जरी, आमोदव्याख्यासहिता.
## RASAMAÑJARĪ WITH THE COMMENTARY ĀMŌDA.

Substance, palm-leaf. Size, 18½ × 1⅜ inches. Pages, 348. Lines, 6 on a page. Character, Telugu. Condition, slightly injured. Appearance, old.

Complete.

Same work as the above and with the same commentary as that described under R. No. 802 of the Triennial Catalogue of MSS., Vol. II, Part I-A, wherein see for the beginning. The author Raṅgaśāyin is said to have studied Śāstras under Mahādēśika of Vādhūlagōtra and learned the principles of composition from his own paternal uncle, Anantācārya. The author is also called Gurijāla Śāyin and was a great songster.

**End:**

कञ्जो हेतुताच्छील्यानुलोम्येषु इति अचि (टप्रत्यये) टित्त्वात् ङीप् । तादृशी मञ्जरी रसमञ्जरी योजिता निर्मितेत्यर्थः । युजेर्ण्यन्तात् भूतार्थे क्तप्र-

त्ययः । अनेन ग्रन्थसमाप्तिः सूचिता । अत्रातिशयोक्तिस्वभावोक्त्युपमालंकाराणां संसृष्टिः ॥ सर्वश्लोकाः १२८.

मञ्जरी भावनीयेयं श्रीगुरीजालशायिनः ।
सूक्तिभिर्जनिता . . . . . . . कविषट्पदैः ॥
गुरिजालशायिपण्डितविरचितरसमञ्जरीश्रितामोदम् ।
अवधारयत्से(तच स)ततं मुरहरनामा द्विरेफराट् कश्चित् ॥

**Colophon:**

इति श्रीमद्वाधूलमहादेशिकचरणसरसिजोपासनासमधिगतसकलशास्त्रहृदयेन श्रीचिलुकमर्रिकुलकलशजलधिकौस्तुभधर्माचार्यतनयेन तदग्रजानन्ताचार्यवात्सल्यवर्धितसमस्तदाक्षिणात्यमैथिलकविताश्लाघालङ्घनजङ्घालद्रश्यश्रव्योभयविधप्रबन्धनिर्माणमार्मिकेण वाग्गेयकारचक्रवर्तिना श्रीमद्गुरिजालशायिपण्डित(तेन)विरचितायामामोदसमाख्यायां रसमञ्जरीव्याख्यायां सख्यादिनिरूपणं नाम तृतीयं प्रकरणम् ॥

---

No. **12942.** रसमञ्जरी, आमोदव्याख्यासहिता.

RASAMAÑJARĪ WITH THE COMMENTARY ĀMŌDA.

Substance, paper. Size, 13¼ × 8½ inches. Pages, 270. Lines, 20 on a page. Character, Telugu. Condition, good. Appearance, new.

Breaks off in the 90th stanza of the Nāyikānirūpaṇa.

Same work as the above.

---

No. **12943.** रसमञ्जरीव्याख्या—व्यङ्ग्यार्थकौमुदी.

RASAMAÑJARĪVYĀKHYĀ : VYAṄGYĀRTHAKAUMUDĪ.

Substance, paper. Size, 12⅝ × 6 inches. Pages, 116. Lines, 16 on a page. Character. Dēvanāgarī. Condition, good. Appearance, old.

Complete.

Same work as that described under R. No. 1132 of the Triennial Catalogue of MSS., Vol. II, Part I-A; but with the introductory stanzas which are given below. The author Anantapaṇḍita was the grandson of Bālōpaṇḍita and the great grandson of Nīlakaṇṭhapaṇḍita. He was patronized by King Candrabhānu of Benares for whose delectation the commentary is said to have been written. It was dedicated to God Narahari. For further particulars about the author and his patron, see under No. 1224, on page 356 of the India Office Library Catalogue wherein Candrabhānu is stated to have been surnamed Svaḥśākhin.

**Beginning:**

सर्वे साधुजनाः सदायतहृदः सत्संप्रदायादलं
यज्ज्ञानाय कणादगौतममतान्यालोच्य तत्त्वार्थदान् ।
वेदान्तान् परिशीलयन्ति रहसि स्वानन्दकन्दाकरं
वन्दे तं जगदीश्वरं दयितया सानन्दमालिङ्गितम् ॥

कलितललितवंशीरन्ध्रसाधारणैकप्रवणचपलचञ्चत्पल्लवाभाङ्गुलीकम् ।
अभिनवजलजातीबृन्दचन्द्राननश्रीनियमितनयनान्तं गोपिकाकान्तमीडे ॥

मूले कल्पतरोरमन्दवलितग्रीवं गवालोकने
ब्रह्मेन्द्रादिलुठन्महार्थ(र्घ)मकुटस्पृष्टाङ्घ्रिपीठं वपुः ।
लीलालम्पटगोपबालकबलव्यग्राननं गोपिका
संकेतस्वनसावधानहृदयं संचिन्तये श्रीपतेः ॥

सकलसुरमहेशं तत्त्वविद्योपदेशं करवलयितशेषं यो(द)त्तलक्ष्मीनिवेशम् ।
धृत(तनु)कलिनानि(सुयो)शेषं कर्णभूषाहिशेषं श्रितजटिलसुवेषं चिन्तये चिद्विशेषम्॥

पञ्चाशद्वर्णभेदैरपरिमिततरैरर्थजातैश्च युक्ता
नानालङ्काररम्यागणितगुणगणा साधुवृत्तैरुपेता ।
वाक्सृष्टिर्यत्प्रसादात्प्रसरति रसनोपान्तदेशेन मे वा-
ङ्नित्यं चित्तेऽनुरक्ते वसतु मम मुखं भारती सा रसाद्या(ढ्या) ॥

आसीदासीमभूमीपतिपरिबृढो(ढदो)र्दण्डचण्डप्रताप-
ज्वलामालाकरालानलशयनमहावारिवाहप्रवाहः ।
विद्वद्दानाम्बुधारा(रु)चिरपरिचयोत्पादितानल्पधर्मः
स्वःशाखी ख्यातकीर्तिः प्रमुदितहृदयः काशिराजाभिधानः ॥

यदीयनगरे परे वसति स स्वयं शंकरः
समस्तजनघातजप्रबलपापसंत्रासतः ।
तिरस्कृतभवोद्भवप्रचुरमुक्तमुक्ताफल-
प्रकृष्टविबुधालये सुरसरिद्रसालङ्कृते ॥

तद्वंशजो धनुरिवाभवदेकवीरः सत्पार्थिवप्रकरकेलिविलासशाली ।
योऽलच्चदः क्षितितले किल मार्गणानां राजा प्रतापवहरुद्रमनोज्ञकान्तिः ॥

येन श्रीवैरिवीरोद्भवरुधिरनदीनिर्मिता शक्तिघातै-
स्तत्तत्पर्यस्तमस्तव्रजचिकुरलसद्दीर्घसे(शै)वालजाला ।

त्रुट्यन्मातङ्गकुम्भस्थलबहलगलच्चारुमुक्ताकलाप-
प्रोद्यत्सत्सैकतान्तःपतितगजघटाकोटिशुण्डादिनका ॥
अजनि ततो जनगीयमानकीर्तिर्मधुकरशाह इति प्रसिद्धनामा ।
जगति जनार्दनचिन्तनैकचित्तः स्फुरदुरुसूर्यसहस्रकोटिधामा ॥
* * * *
तस्माद्भूच्छ्रीवरवीरसिंहदेवाभिधानः प्रभुतानिधानम् ।
कलासु सर्वास्वथ पुण्यदासु विशारदः शारदचन्द्रकान्तः ॥
यस्य स्फारविपक्षपक्षसुवधूवैधव्यदीक्षागुरुः
संग्रामाध्वरकर्ममर्मकुशलः प्रत्यर्थिपृथ्वीभुजाम् ।
प्राणानर्घ्यमणे(नां समरे) मयापहरणं नाकारि किंतु प्रभो
भ्रूभङ्गेन तवेति दिव्यमभजत्कोशं सुखड्गः परः ।
* * * *
तदात्मजः साधुगुणैरुपेतः श्रीचन्द्रभानुः प्रथितः पृथिव्याम् ।
ववर्ति सर्वोपरि गीतकीर्तिः सदा मुदा ध्यानपरः परेशे ॥
यस्य श्रीक्षितिपालमौलिनृपतेर्दानाम्बुनोत्पादितः
स्वःशाखीति विभाव्यते बुधगणैस्तत्त्वार्थसंदर्शिभिः ।
या केनापि कदापि किं चिदपि वा नालम्बि सा वाल्पतो
नो चेदुत्कटदानरीतिरभवत्कस्मादमुष्मिस्तरौ ॥
* * * *
विद्वद्भिः समुपाश्रिता मुनिगणव्रातैः पुराणैः पुरा
शाखाभिर्निगमद्रुमस्य रचिता विद्यातरिः सादरम् ।
ममाप्यत्र दरिद्रभावजलधौ सत्कर्णधाराधिक-
श्रीवीरोद्भटचन्द्रभानुविभुना येनाधुना तार्यते ॥
व्यञ्जनाममग्नचित्तेन गौतमीतीरवासिना ।
श्रीत्र्यम्बकतनूजेन पण्डितानन्तशर्मणा ॥
रसिकस्मृतिभूषास्ति भुवि या रसमञ्जरी ।
व्यङ्ग्यार्थकौमुदी तस्यास्तन्यते तत्कुतूहलात् ॥
आदरादपि कुर्वन्तु दुर्जना न कथंचन ।
हेलयापि च सन्तोऽत्र दृष्टिं कुर्वन्तु मत्कृतौ ॥
किं मे प्रार्थनयाथवा यदि गुणः कश्चित् स्वसूक्तौ भवे-
द्विद्वद्वृन्दमिदं तदाहननरं तेनैव बद्धादरम् ।

नोचेद्दीनदयालुदैन्यवचनैस्तच्छ्रोष्यते केवलं
चित्तं संमदमातनोति कृतिनः किं तावता स्वान्तरे ॥
सुगुणापि हन्त विगुणा भवति खला स्याद्विचित्रवर्णापि ।
आखुमुखादिव शाटी पदपरिपाटी कवेः कापि ॥
सदोषमपि निर्दोषं भवत्यग्रे विपश्चितः ।
रामस्येवार्जुनवपुः कवेश्च सरसं वचः ॥

**End :**

श्रीभानुना कविना स्वकृतेन आत्मनिर्मितेन पद्येन श्लोकेन; एकत्वमविवक्षितम् । योजिता संहिता वाग्देवीश्रुतिपारिजातकुसुमस्पर्धाकरी वाग्देव्याः श्रोत्रे यत् पारिजातकुसुमं तत्सदृशी मञ्जरी जयतु आकल्पं तिष्ठतु ॥

स्वस्ति स्तादतुलं समस्तवसुधाधीशस्य सर्वोत्कट-
स्फारोर्वीवलयैकभूषणगुणग्रामस्य कल्पावधि ।
श्रीमच्चन्द्रमणेर्बुधव्रजमहाचिन्तामणेरर्णव-
प्रोद्यद्रत्नशिरोमणेरखिलसद्धर्मैकरक्षामणेः ॥

यदीयगुणवर्णने दशशती मुखानां परं
सखेदमिव भोगिनः किमपि नैव शक्ताभवत् ।
तदीयकुतुकान्मया यदिह किंचिदावेदितं
तदेतदखिलं पदे नरहरेश्चिरं तिष्ठतु ॥

यदपि हृदयहारि व्यङ्ग्यमन्यच्चकास्ति
प्रतिपदमपि भानोर्वाग्विलासे रसाले ।
तदपि न च मयैतद्ग्रन्थबाहुल्यभीत्या
प्रकटितमिह बुद्ध्या भावनीयं बुधैस्तत् ॥

**Colophon :**

इति श्रीगौतमीतीरपुण्यस्तम्भस्थितिमतिविलासशालिनीलकण्ठपण्डिततनूजबालोपण्डिताङ्गजश्रीमत्र्यम्बकपण्डितात्मजानन्तपण्डितविरचिता श्रीमहाराजाधिराजप्रभुकुलतिलकायमानश्रीवीरसिंहदेवतनूजप्रौढप्रतापद्युमणिमरीचिनिरस्तसकलजनदुःखौघध्वान्तश्रीचन्द्रभानुकुतूहलकुमुदवनविकासिनी रसमञ्जरीव्यङ्ग्यार्थकौमुदी संपूर्णतामगात् ॥

## No. 12944. रसमञ्जरीव्याख्या—व्यङ्ग्यार्थकौमुदी.
## RASAMAÑJARĪVYĀKHYĀ: VYAṄGYĀRTHA-KAUMUDĪ.

**Pages**, 172. Lines, 7 on a page.

Begins on fol. 1*a* of the MS. described under No. 12938.

Contains up to the end of the Nāyikānirūpaṇa.

Same work as the above, but without the introductory stanzas.

---

## No. 12945. रसार्णवसुधाकरः.
## RASĀRṆAVASUDHĀKARAḤ.

Substance, palm-leaf. Size, $15\frac{5}{8} \times 1\frac{1}{2}$ inches. Pages, 236. Lines, 7 on a page. Character, Telugu. Condition, good. Appearance, old.

Complete in three Ullāsas.

Same work as that described under No. 21 on pages 7 to 11 and 91 to 98 of M. Seshagiri Sastri's Report No. 1. By Sarvajña Śiṅgabhūpāla. This work has now been printed in the Trivandrum Sanskrit Series.

---

## No. 12946. रसार्णवसुधाकरः.
## RASĀRṆAVASUDHĀKARAḤ.

**Pages**, 168. Lines, 28 on a page.

Begins on fol. 1*a* of the MS. described under No. 859.

Complete.

Same work as the above.

---

## No. 12947. रसार्णवसुधाकरः.
## RASĀRṆAVASUDHĀKARAḤ.

Substance, paper. Size, $8\frac{1}{4} \times 6\frac{1}{2}$ inches. Pages, 222. Lines, 20 on a page. Character, Telugu. Condition, fair. Appearance, old.

Complete.

Same work as the above.

---

## No. 12948. रसार्णवसुधाकरः.
## RASĀRṆAVASUDHĀKARAḤ.

**Pages**, 36. Lines, 16 on a page.

Begins on fol. 190*b* of the MS. described under No. 12430.

Contains the Rūpakaparibhāṣā in the third Ullāsa.

Same work as the above. For extracts from the Rūpakaparibhāṣā, see under R. No. 369(*c*) of the Triennial Catalogue of MSS., Vol. I, Part I-B.

---

No. **12949.** रसार्णवसुधाकरः.
RASĀRṆAVASUDHĀKARAḤ.

Pages, 20. Lines, 20 on a page.

Begins on fol. 13*a* of the MS. described under No. 3894.

Contains the Rūpakaparibhāṣā in the third Ullāsa.

Same work as the above.

---

No. **12950.** रामचन्द्रयशोभूषणम्.
RĀMACANDRAYAŚŌBHŪṢAṆAM.

Substance, palm-leaf. Size, 12 × 1⅛ inches. Pages, 99. Lines, 5 on a page. Character, Nandināgarī. Condition, injured. Appearance, old.

Contains the following Paricchēdas :—

१. शृङ्गाररसनिरूपणम्.

२. वीराद्यष्टरसनिरूपणम्.

३. भावनिरूपणम्.

A treatise on the poetic sentiments, such as Śṛṅgāra, Vīra, etc., and the Bhāvas connected therewith. The author is Kacchapēśvaradīkṣita, whose genealogy is thus given:

Kālahastīśvarayajvan (native of Brahmadēśa, a village in the North Arcot district, and the author of a commentary on the Bhāgavata)

Nārāyaṇayajvan | Vasudēvayajvan | Kṛṣṇayajvan

Vasudēvayajvan → Kacchapēśvaradīkṣita.

The illustrations given in the work are in praise of the valour of Bommarāja (probably of the Karvetnagar Zamindāri in the North Arcot district). The work is entitled Rāmacandrayaśōbhūṣana, as it is so called in the colophon at the end of the MS.

**Beginning:**

श्रीमत्काश्चनपीठसंभृतमहाराज्याभिषेकोत्सवे
दत्तां संसदि वल्लभेन दधतीं हस्तेन हारस्रजम् ।

दृष्ट्वाथो दयितां समीरणभुवे तां दित्सतीमीक्षया
सप्रेम स्मितमादिशन् दिशतु वः श्रेयो रघूणां पतिः ॥

किंच—

मृदुचरणोल्लसद्रुचिरनूपुर (किङ्किणिझं) कृतिः कृती
गुरुमणिमेखलाविविधरत्नमहामकुटाङ्गदाञ्चितः ।
पटुखरशासनो घननिजात्मरुचिः कनकोज्ज्वलाम्बरो
वररविवंशजस्तव मुदेऽस्तु सदा जनकात्मजाविभुः ॥

अत्र चम्पकावृत्ते प्रमिताक्षरा द्रुतविलम्बिताख्यवृत्तद्वयं निगूढं द्रष्टव्यम् ।

श्रीब्रह्मदेशाभिधमग्रहारमधिष्ठितो वेदविदां वरिष्ठः ।
श्रीकालहस्तीश्वरयज्वव(र्य)श्चक्रे स्फुटं भागवतस्य टीकाम् ॥

तस्य—

विख्यातनारायणवासुदेवश्रीकृष्णसंज्ञास्तनया बभूवुः ।
विरिञ्चवैकुण्ठहरावतारान् विज्ञानिनो यान् विबुधा वदन्ति ॥

तत्र—

वासुदेवसुमतेस्तनूभवः कच्छपेश्वरमखीति विश्रुतः ।
सन्तनोमि रसरूपणं नवं लालनीयमखिलैर्बुधैरहम् ॥
भ्रमर इव मरन्दं पुष्पपुञ्जे विचिन्वन् कृतिषु बहुषु सारं सङ्ग्रहेण ब्रवीमि ।
सरसविबुधचेतोरञ्जनार्थं रसानामनुगुणबहुभावप्रौढबन्धं प्रबन्धम् ॥

विरसमनसामेषा तोषं कृतिर्न करोति चेत्
स(रसहृद)यास्सन्तो गृह्णन्त्यमत्सरदूषिताः ।
सकलनृपतिश्लाघ्यं क्षौमाम्बरं हि दिगम्बर-
क्षपणकजनप्रीत्यै नोचेन्न त(स्य भवे)त् क्षतिः ॥
शृङ्गारवीरादिनिरूपणेषु कृताविहोदाह(र)णीक्रियन्ते ।
श्रीबोम्मभूपालतदीययोधनद्वैरिणो वैरिवधूजनाश्च ॥

प्रथमन्तावद्रसोपादानभूतानां रत्यादीनामुत्पत्तिर्वर्ण्यते—

लोके लावण्यसंयुक्तां तारुण्यरुचिभूषिताम् ।
कुशलां कुलजां तन्वीं सुविलासां शुचिस्मिताम् ॥
सुकेशीं सुभ्रुवं दृष्ट्वा श्रुत्वा वा दूतिकामुखात् ।
कुलीनस्सत्त्वसम्पन्नः कलावित्कान्तविग्रहः ॥

इङ्गितज्ञोऽतिकुशलस्सदा भोगपरायणः ।
युवा कामयते कान्तामियं मम भवेदिति ॥
कान्ता वा तरुणं दृष्ट्वा श्रुत्वा वा दूतिकामुखात् ।
एवमन्योन्यतो यूनोः पृथगुत्पद्यते रतिः ।

* * * *

**Colophon:**

इति श्रीकच्छपेश्वरदीक्षितविरचिते शृङ्गाररसनिरूपणं नाम प्रथमः परिच्छेदः ॥

**End:**

यथा—

रूपं स्निग्धतरं दृशौ च निशिते हासं च हेतूज्झितं
वक्षोजौ मणिकुम्भजित्वरतरौ मध्यं कृशं चालसम् ।
स्त्यानश्चोरुयुगं गुरु प्रतिदिनं श्रोणीभरं पुष्णता
बाला सा नवयौवतेन रचिता धन्येति मन्येऽधुना ॥
पुष्पेभ्यो भ्रमरेण संभृतमिव क्षौद्रं मनोज्ञैर्वचो-
गुम्भैः पूर्वकविप्रबन्धनिवहादुद्धृत्य सारं कृतम् ।
विद्वन्मण्डललालनीयवचसा श्रीकच्छपेशेन त-
च्छृङ्गारादिनिरूपणं विजयतामाचन्द्रतारस्थिति ॥

**Colophon:**

इति श्रीकच्छपेश्वरदीक्षितविरचिते श्रीरामचन्द्रदेवयशोविभूषणे रसनिरूपणे भावनिरूपणं नाम तृतीयः परिच्छेदः ॥

---

## No. 12951. लक्षणदीपिका.
## LAKṢAṆADĪPIKĀ.

Substance, paper. Size, 11¼ × 8⅝ inches. Pages, 30. Lines, 20 on a page. Character, Telugu and Dēvanāgarī. Condition, good. Appearance, new.

Begins on fol. 1*a*. The other works herein are Lakṣaṇadīpikā 17*a*, Kārakasaṅgraha 31*a*.

**Breaks off in the sixth Prakāśa.**

The names of these Prakāśas are as given below :—

१. काव्यस्वरूपनिरूपणम्.
२. परिभाषानिरूपणम्.
३. काव्यलक्षणभेदलक्षणम्.
४. कलिकोत्कलिकादिनिरूपणम्.
५. उदाहरणभेदनिरूपणम्.
६. नायिकानिरूपणम्.

A work on poetics: by Gauranārya, son of Āyamaprabhu. He was the brother of Mitarāya, who was the minister of King Śiṅgaya Mādhava of Rēcarla family. The author salutes Piṅgala in the beginning. This work is also called Prabandhadīpikā and Padārthadīpikā.

**Beginning:**

जानकीमुखपद्मार्कं जानकीकुचभूषणम् ।
जानकीरमणं वन्दे जगतां मङ्गलप्रदम् ॥
वन्दे वामस्तनन्यस्तवल्लकीवदनोत्सुकाम् ।
वक्त्राब्जवासनालोलभृङ्गीं सङ्गीतमातृकाम् ॥
अस्ति प्रशस्तावनिपालमौलिरत्नावलीरञ्जितपादपीठः ।
रेचर्लवंशार्णवपूर्णचन्द्रः महाबलस्सिङ्गयमाधवेन्द्रः ॥
आसीत्तस्य महामात्यः स्वामिकार्यधुरन्धरः ।
मितराज इति ख्यातिं(तः) राजनीतियुगन्धरः ॥
मन्त्रिचूडामणेस्तस्य सोदरस्यायमप्रभोः ।
गौरनार्य इति ख्यातस्तनयो नयकोविदः ॥
सोऽहं सोमकलामौलेः प्रसादाद्धतकल्मषः ।
प्रणम्य पिङ्गलं नाम कविपुङ्गवसन्नुतम् ॥
उदाहरणरत्नानि लक्षणग्रन्थिसन्धिषु ।
समाकृष्य सतां भूत्यै वक्ष्ये लक्षणदीपिकाम् ॥
पदार्थदीपिका सेयं भाति लक्षणदीपिका ।
वर्णानामुद्भवः पश्चात् व्यक्तिसंख्या ततः परम् ॥
भूतबीजविचारश्च ततो वर्णाग्रवानपि ।
अनर्हानर्हवेदश्च रूक्षस्निग्धविचारणा ॥
प्रयोगनिर्णयस्तेषां शुभाशुभफलानि च ।
गणानाश्चाभिधानानि स्वरूपाण्यधिदेवताः ॥

वर्णभेदग्रहास्तत्र शुभाशुभफलानि च ।
मित्रामित्रविचारश्च नक्षत्राणि च राशयः ॥
मृतवेलाग्रहावस्था मातृकापूजनक्रमः ।
कर्तुः कारयितुश्चैव प्रबन्धानाञ्च लक्षणम् ॥
वक्ष्यते तत्र सकलं मया लक्षणवेदिना ।
एतत्सर्वमविज्ञाय यदि पद्यं वदेत्कविः ॥
केतकारूढकपिवद्भवेत् सन्देशवेदिनः ।

किञ्च साहित्यचूडामणौ—

अनेकच्छन्दसां सम्यगज्ञात्वा लक्षणानि च ।
करोति गद्यपद्यादीन् प्रभूणां मृत्युरेव सः ॥

* * * *

**Colophon:**

इति लक्षणदीपिकायां काव्यनिरूपणं नाम प्रथमः प्रकाशः ।

**End:**

अन्तेऽनुष्टुभमार्यां वा कविकृत्याख्ययान्विताम् ।
कुर्याच्चाटुप्रबन्धानामयं साधारणो विधिः ॥

**Colophon:**

इति प्रबन्धदीपिकायामुदाहरणभेदनिरूपणं नाम पञ्चमः प्रकाशः ॥

स्वान्या साधा रणी चेति स्त्रीणामादौ त्रिरूपता ।

* * * *

स्वाधीनपतिकापि अष्टावस्थाभेदनैकैकाष्टविधा जाता । एवं षोडशाधिक-शतद्वयम् ।

---

## No. 12952. लक्षणदीपिका.
## LAKṢAṆADĪPIKĀ.

Pages, 25. Lines, 20 on a page.

Begins on fol. 17*a* of the MS. described above.

Complete.

Similar to the above, but this work is written in verse and prose by Gauranārya, son of Ayyalumantrin, brother of Pōtana. The author refers to Alaṅkārasaṅgraha, Kavikaṇṭhapāśa, Camatkāracandrikā, Sāhityacandrōdaya, etc.

**Beginning:**

प्रणम्य विद्वज्जनकल्पपादपं कविं कवीन्द्रार्चितपादपङ्कजम् ।
विभुं प्रभुं विश्वसृजं महेश्वरं प्रवक्ष्यते लक्षणदीपिकेयम् ॥

अस्य गद्यपद्यप्रबन्धानां छन्दोलक्षणनियामकस्य ग्रन्थस्यादौ तत्प्रकारः परिकथ्यते । वकारप्रयोगे दोषोऽस्ति । कथम् । उच्यते—

न प्रतापिभयासौख्यमरणक्लेशतापकृत् । पवर्ग इत्यलङ्कारसङ्ग्रहे—पद्यादौ विन्यस्तात् भजवरणदक्षादिरहितादिति । कविकण्ठपाशे—अपि च दोषान्तरमाह । पकारो रेफसंयुक्तोऽप्यतिदोषकरस्स्मृतः । चमत्कारचन्द्रिकायाम्—क्षं विना क्रूरसंयुक्ताः सौम्यास्त्वाजौ विषान्तवत् । इति ।

* * * *

अथ नायकलक्षणमाह—

कलमृदु(ल)वचनरचनः करुणाभावः कलानिधिर्विनया(यी) ।
(बहु)वितरणकरशी[ल]लो विचक्षणो नायको ज्ञेयः ॥

तथा साहित्यचन्द्रोदये—

कलाप्रवीणो भावज्ञो वदान्यः कविताप्रियः ।
महानुभावो विनयो नायकः परिकीर्तितः ॥

* * * *

**Colophon:**

इति कविनुतवितरणविजितपारिजातपोतनामात्यसहजातचातुर्यगुणाभिरामश्रीमदय्यलुमन्त्रिशेखरगर्भरत्नाकरश्रीगौरणार्यविरचितायां लक्षणदीपिकायां प्रथमः परिच्छेदः ॥

**End:**

अक्षराणां गद्यपद्येषु तत्तत्स्थानप्रयोगनिषेधे षट्सप्तलाभगाशहचटाः कलहप्रदाः ॥

इति चतुर्थपरिच्छेदः ॥

अथ मातृकापूजनमाह चमत्कारचन्द्रिकायाम्—

अकारादिक्षकारान्तवर्णाः स्युः मातृकाह्वयाः ।

साहित्यरत्नाकरे—

पुमानुद्दिश्य पद्यं वा प्रबन्धं वा कदाचन ।
न वक्तव्यं न वक्तव्यं मातृकापूजनं विना ॥

* * * *

एषा लक्षणदीपिका विजयते विद्वज्जनानन्दिनी
छन्दोम्बुक(व्याक)रणाद्यनेकविविधग्रन्थप्रयोगान्विता[म्] ।
गत्वात्सर्व(सत्तात्पर्य)कुतर्ककर्कशकविश्रीवासदासाश्रित-
व्यालीसत्कविराजकल्पलतिका कल्पान्तरस्थायिनी ॥

---

## No. 12953. लक्षणमालिका, अलङ्कारेन्दुशेखरव्याख्यासहिता.
## LAKṢAṆAMĀLIKĀ WITH THE COMMENTARY ALAṄKĀRĒNDUŚĒKHARA.

Substance, palm-leaf. Size, $17\frac{5}{8} \times 1\frac{1}{4}$ inches. Pages, 125. Lines, 7 on a page. Character, Telugu. Condition, good. Appearance, new.

Breaks off in the Utprēkṣā of the Arthālaṅkāraprakaraṇa.

This is a treatise in poetics and rhetoric, and deals with the topics mentioned in the second stanza thereof quoted below. The commentary, accompanying the text, is called Alaṅkārēnduśēkhara, and was written by Śrīśaila Nṛsiṁhakavi. For further particulars about the author and extracts from the commentary, see under No 22 on pages 11 and 98 of M. Seshagiri Sastri's Report No. 1.

**Beginning** of the text :

वन्दे वन्दारुसंदोहमन्दिरालिन्दकल्पकम् ।
अब्जारिकलितं देवं श्रीशैलशिखरेश्वरम् ॥
नेतृकाव्यरसालङ्कारेषु नाटकपद्धतौ ।
क्रियते बालबोधार्थं लक्ष्यलक्षणमालिका ॥
काव्यं हि यशसेऽर्थाय शिवेतरनिवृत्तये ।
कान्तावदुपदेशाय परनिर्वृतये (मतम्) ॥

---

## No. 12954. वाग्भटालङ्कारः.
## VĀGBHAṬĀLAṄKĀRAḤ.

Substance, Śrītāla. Size, $14 \times 1\frac{5}{8}$ inches. Pages, 26. Lines, 7 on a page. Character, Kanarese. Condition, slightly injured. Appearance, old.

Complete in five Paricchēdas.

A well-known work in poetics and rhetoric by Vāgbhaṭa. The work has been printed with a commentary in the Kāvyamālā Series. According to the footnote on pages 1 and 2 of this edition, the author was the son of Sōma and the minister of Jayasiṁha of Anahillapura

who reigned between 1093 and 1143 A.D. It is also stated that the author is different from Vāgbhata, the authors of the Kāvyānuśāsana and of the Aṣṭāṅgahṛdaya. For further information see the same footnote.

**Beginning:**

श्रियं दिशतु मे देवः श्रीनाभेयजिनस्सदा ।
मोक्षमार्गं सतां ब्रूते यदागमपदावली ॥
साधुशब्दार्थसन्दर्भं गुणालङ्कारभूषितम् ।
स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्तये ॥
प्रतिभा कारणं तस्य व्युत्पत्तिस्तु विभूषणम् ।
भृशोत्पत्तिकृदभ्यास इत्याद्यकविसङ्कथा ॥
प्रसन्नपदनव्यार्थयुक्त्युद्बोधविधायिनी ।
स्फुरन्ती सत्कवेर्बुद्धिः प्रतिभा सर्वतोमुखी ॥
शब्दधर्मार्थकामादिशास्त्रेष्वाम्नायपूर्विका ।
प्रतिपत्तिरसामान्या व्युत्पत्तिरभिधीयते ॥
अनारतं गुरूपान्ते यः काव्यरचनादरः ।
तमभ्यासं विदुस्तस्य क्रमः कोऽप्युपदिश्यते ॥

**End:**

सम्यक् ज्ञानोदयस्थानः शान्तो निःस्पृहनायकः ।
रागद्वेषपरित्यागात् सम्यग्ज्ञानस्य संभवः ॥
दोषैरुज्झितमाश्रितं गुणगणैश्चेतश्चमत्कारिणं
नानालङ्कृतिभिः परीतमभितो रीत्या स्फुरन्त्या सताम् ।
तैस्तैस्तन्मयतां गतं नवरसैराकल्पकालं कवि-
स्रष्टारो घटयन्तु काव्यपुरुषं सारस्वतध्यानिनः ॥

**Colophon:**

इति वाग्भटालङ्कारे पञ्चमपरिच्छेदः ॥

---

No. 12955. शृङ्गारतिलकम्.
ŚṚṄGĀRATILAKAM.

Pages, 64. Lines, 16 on a page.

Begins on fol. 1a of the MS. described under No. 12786.

Complete in three Paricchēdas.

A work dealing with the delineation of Rasas or poetic sentiments, such as Śṛṅgāra, Vīra, Hāsya, etc., in poetic compositions especially in Śravyakāvya as opposed to Dṛśyakāvya: by Rudraṭa. The work has been printed in the Kāvyamālā Series.

Contains the following subjects :—

१. सम्भोगशृङ्गार.
२. विप्रलम्भशृङ्गार.
३. हास्यादिरसनिरूपण.

**Beginning :**

शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणी (च) भयकृन्मूर्त्याद्भुतस्तुङ्गया ।
रौद्रो दक्षविमर्दने च हसकृन्नग्नः प्रशान्तश्चिरा-
दित्थं सर्वरसात्मकः पशुपतिः भूयात् स वो भूतये ॥

आख्यातनामरचनाचतुरश्रसन्धिसद्भात्वलङ्कृतिगुणं सरसं सुवृत्तम् ।
आसेदुषामहि दुवं(पि दिवं) कविपुङ्गवानां तिष्ठत्यखण्डमिह काव्यमिदं शरीरम् ॥

काव्ये शुभे विरचिते खलु नोखलेभ्यः कश्चित् गुणो भवति यद्यपि सम्प्रतीह ।
कुर्यात्तथापि सुजनार्थमिदं यतः किं यूकाभयेन परिधानविमोक्षणं स्यात् ॥

सानन्दप्रमदाकटाक्षविशिखैर्येषां न भिन्नं मनो
यैस्संसारसमुद्रपातविधुरेष्वन्येषु पोतायितम् ।
यैर्निस्सीमसरस्वतीविलसितं द्वित्रैः पदैस्संहृतं
तेषामप्युपरि स्फुरन्ति मतयः कस्यापि पुण्यात्मनः ॥

प्रायो नाट्यं प्रति प्रोक्ता भरताद्यै रसस्थितिः ।
यथामति मया त्वेषां काव्यं प्रति निगद्यते ॥

* * * *

तस्माद्यत्नेन कर्तव्यं काव्यं रसनिरन्तरम् ।
अन्यथा शास्त्रवत्तत्स्यात् गोष्ठीषूद्वेगवादकम् ॥

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताश्च नव काव्ये रसाः स्मृताः ॥

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्साविस्मयशमाः स्थायीभावाः प्रकीर्तिताः ॥

**End:**

इति मया कथितेन पथा विना रसविशेषमशेषमुपेयुषा ।
ललितपादपदा सदलङ्कृतिः कृतधियामिह वाक् वनितायते ॥
शृङ्गारतिलको नाम ग्रन्थोऽयं ग्रथितो मया ।
व्युत्पत्तये निषेवन्ते कवयः कामिनस्स्वयम् ॥
का वा काव्यकथा कीदृक् वैदग्धी को रसागमः ।
किं गोष्ठीमण्डनं हन्त शृङ्गारतिलकादृते ॥
त्रिपुरवधादेव गतामुल्लासमुमां समस्तविबुधानाम् ।
शृङ्गारतिलकविधिना पुनरपि रुद्रः प्रसाधयति ॥

**Colophon:**

इति रुद्रटविरचिते काव्यालङ्कारे शृङ्गारतिलके तृतीयपरिच्छेदस्समाप्तः ॥

---

## No. 12956. शृङ्गारमञ्जरी.
## ŚṚṄGĀRAMAÑJARĪ.

Substance, paper. Size, $6\frac{7}{8} \times 4\frac{3}{8}$ inches. Pages, 28. Lines, 16 on a page. Character, Telugu. Condition, good. Appearance, new.

Complete in three Paricchēdas.

Same work as that described under No. 36 on pages 23 and 231 of M. Seshagiri Sastri's Report No. 2. By Ajitasēna.

---

## No. 12957. शृङ्गारमञ्जरी.
## ŚṚṄGĀRAMAÑJARĪ.

Pages, 36. Lines, 10 on a page.

Begins on fol. 71*a* of the MS. described under No. 12164.

Complete.

Same work as the above.

---

## No. 12958. शृङ्गारसारः.
## ŚṚṄGĀRASĀRAḤ.

Substance, paper. Size, $11 \times 8\frac{3}{8}$ inches. Pages, 182. Lines, 20 on a page. Character, Telugu. Condition, good. Appearance, new.

Restored from the MS. described under the next number.

Complete in six Ullāsas, the names of which are given below :—

१. काव्यनिरूपणम्.
२. नायिकानायकलक्ष्यलक्षण-
विभागः.
३. नायकादिसहायनिरूपणम्.
४. रसभावस्वरूपनिर्णयः.
५. चतुर्विधशृङ्गारप्रदर्शनम्.
६. दशरूपकवर्णनम्.

A work on poetics. The subjects dealt with herein are apparent from the names of the Ullāsas mentioned above. The author is Vēṅkaṭanārāyaṇadīkṣita, son of Lakṣmī and Kāmēśvara of Gōḍavarti family, and refers the reader to his Śṛṅgārasārāvalī for a fuller treatment of the nature and characteristics of dramatic composition. He is said to have composed works in eight languages.

**Beginning** :

अजामिव दधत्कान्तां निजां त्रैवर्ण्यशालिनीम् ।
गजास्यजनकं ज्योतिर्भजामः स्थिरसम्पदे ॥
बाह्वृच्यं सकलं श्रुतिस्मृतिविदामाचारसंशीलनं
वेदान्तार्थरहस्यवेदनमुमाजानेरुपास्तिः परा ।
भाषाभिः कविताष्टभिश्च भुवने ख्याता यदीया स हि
श्रीकामेश्वरवैदिकोत्तमसुतः स्वैरं विजेजीयते ॥
लक्ष्म्यम्बिकागर्भसुधासमुद्रसुधारुचिः श्रीगुडवर्तिवंश्यः ।
शृङ्गारसाराख्यमिदं रसज्ञसन्तुष्टयेऽसौ रचयत्युदारम् ॥
पुष्पसिद्धस्य मधुनो हर्तेर्मधुकरा इव ।
ग्रन्थस्थितानां वचसां संग्रहात् कृतिनो वयम् ॥
शृङ्गारसारावल्याख्ये ग्रन्थे मद्रचिते बुधैः ।
समीक्ष्यतां नाटकादेर्लक्ष्यलक्ष(ण)विस्तरः ॥
अकारादिक्षकारान्तं वर्णस्तु परतां गतः ।
सञ्चयास्तिङ्सुबन्तानां वाक्यान्याहुर्विपश्चितः ॥
तान्येव कविक्लृप्तानि वाक्यानि सरसानि च ।
सालङ्काराणि निर्दोषाण्याहुः काव्यं मनीषिणः ॥
शक्तिर्निदानं काव्यस्य कथ्यते काव्यवेदिभिः ।
शब्दच्छन्दोवि(ऽभि) ? धानाभि(धैः)शास्त्रलोकावलोकनात् ॥
नैपुण्यं कविशिक्षा च त्रितयं काव्यकारणम् ।
न जातु जायते काव्यं यां विना कारणैरपि ॥

शब्दच्छन्दोवि(ऽभि) ? धानाद्यैस्सा शक्तिरभिधीयते ।
जातमप्यपहासाय कल्पते कविसन्ततेः ॥
शब्दच्छन्दोवि(ऽभि) ? धानानां न विधिस्संग्रहादिह ।
तेषां स्वरूपमन्यत्र बोद्धव्यं बुद्धिशालिभिः ॥
पद्यं गद्यं च मिश्रं च त्रिविधं काव्यमुच्यते ।
पद्यन्तु छन्दसा बद्धं गद्यं वाक्यकदम्बकम् ॥
गद्यपद्यात्मकं मिश्रं चम्बु(म्पु)रित्यभिधीयते ।

**End:**

इति नाटिका । उक्तानां प्रकरणादिरूपकाणां लक्ष्याणि मदीयशृङ्गारसारावल्यादौ द्रष्टव्यानि । एवं सट्ट(क)भाणिकादिरूपकविशेषाणां लक्ष्यलक्षणविभागः शृङ्गारप्रकाशादिषु ग्रन्थेष्वनुसन्धेयः ॥

**Colophon:**

इति श्रीगोडवर्तिकुलकलशजलधिराकासुधाकरस्य लक्ष्मीकुमारस्य वेङ्कटनारायणदीक्षितस्य कृतौ शृङ्गारसारे दशरूपकवर्णनं नाम षष्ठ उल्लासः ॥

---

## No. 12959. शृङ्गारसारः.
## ŚṚṄGĀRASĀRAḤ.

Substance, palm-leaf. Size, $15\frac{5}{8} \times 1\frac{1}{8}$ inches. Pages, 175. Lines, 5 on a page. Character, Telugu. Condition, injured. Appearance, old.

Begins on fol. 1*a*. The other work herein is Śrutabōdha 89*a*.

Complete.

Same work as the above.

---

## No. 12960. शृङ्गारादिविषयः.
## ŚṚṄGĀRĀDIVIṢAYAḤ.

Substance, palm-leaf. Size, $11\frac{1}{4} \times 1\frac{5}{8}$ inches. Pages, 16. Lines, 10 on a page. Character, Kanarese. Condition, slightly injured. Appearance, old.

Begins on fol. 19*a*. The other work herein is Śrīdēvatākalpa 1*a*.

Wants the introduction and the end.

A treatise describing the different kinds of Rasa in poetry. The name of the work, as well as of the author, is not given.

**Beginning:**

शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताख्य(।)रसाः पूर्वैरुदीरिताः ॥
एके तु निर्विकारत्वान्न शान्तं मेनिरे रसम् ।
प्रेमादयस्तु पूर्वोक्त(क्ते)न पृथग्गदिता(इ)ति ॥

रसलक्षणं तु—

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायीभावो रसः स्मृतः ॥

एतानुपरि विवेचयिष्यामः । रसरूपणक्रमस्तु—

आश्रयास्तत्सहायाश्च भावास्तेषां क्रमा अपि ।
रसानां सङ्करश्चैव तेषां सञ्चरणक्रमः ॥

**End:**

लज्जास्मरत्वं यथा—

सुप्तोऽयं सखि सुप्यतामिति गताः सख्यस्ततोऽनन्तरं
प्रेमावेशतया मया गतभिया न्यस्तं मुखं तन्मुखे ।
ज्ञातेऽलीकनिमीलने नयनयोः धूर्तस्य मां वञ्चतो
लज्जासीन्मम तेन साप्यपहृता तत्कालयोग्यैः क्रमैः ॥

मोहान्तसुरतक्षमत्वं यथा—गाढालिङ्गननार्मनिर्वृत.

---

No. 12961. शृङ्गारामृतलहरी.

ŚṚṄGĀRĀMṚTALAHARĪ.

Substance, paper. Size, 10½ × 1½ inches. Pages, 27. Lines, 14 on a page. Character, Dēvanāgarī. Condition, slightly injured. Appearance, old.

Complete.

A work on Rasa, especially on the erotic sentiment of **शृङ्गार**, by Sāmarājadīkṣita, a descendant of Narahari Bindupurandara.

Dated: 1881 Samvat.

**Beginning:**

सिन्धुसुताकुचकुङ्कुमपाटलवक्षःस्थलं किमपि ।
उपवीणितञ्च निगमैः सटाजटालं महः कलये ॥
नरहरिबिन्दुपुरन्दरजनुषा विदुषाथ सामराजेन ।
शृङ्गारामृतलहरी विरच्यते रसिकजीवातुः ॥

तत्र तावद्रसो विचार्यते—

स्थायीभावो रसः । ननु स्थायित्वव्यपदेशतया रसस्य नैरन्तर्यापत्तिः । मैवम्—

विरुद्धाविरुद्धभावानभिभाव्यतया स्थायित्वव्यपदेशो न तु नित्यतया । उक्तश्च भरतेन—

विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ।
आनन्दाङ्कुरवीरोऽसौ भावस्थायिपदास्पदम् ॥

केचित्तु स्थायिवृत्तिरूपः सूक्ष्मोऽन्तःकरणपरिणमविशेषोऽन्तःकरणात्मा धर्मधर्मिणोरभेदादित्याहुः ।

**End**:

मलयानिलो यथा—

भृङ्गश्रेणीकृपाणीसरसिरुहवधूधूलिभिर्धूसराङ्गः
पम्पासम्पातकम्पस्खलितगतिरलं माधवीमल्लिकासु ।
मन्दं मन्दं विसर्पन्मलयगिरिदरीगह्वरेभ्यो दुकूलं
कर्षत्कर्णाटकान्ताकुचकलशगतं वाति मन्दस्समीरः ॥

अनुभावव्यभिचारिभावाश्च ग्रन्थान्तरेषूह्याः । इह ग्रन्थगौरवान्न लिखिताः ॥

**Colophon**:

इति कविकुलतिलकनरहरिबिन्दुपुरन्दरकुलोत्तंसश्रीसामराजदीक्षितरचिता शृङ्गारामृतलहरी समाप्ता ॥

---

## No. **12962**. सरस्वतीकण्ठाभरणम्.

## SARASVATĪKAṆṬHĀBHARAṆAM.

Substance, paper. Size, $13\frac{1}{2} \times 8\frac{5}{8}$ inches. Pages, 141. Lines, 24 on a page. Character, Telugu. Condition, good. Appearance, old.

Begins on fol. 81*a*. The other work herein is Nāmaliṅgānuśāsanavyākhyā : Ṭīkāsarvasva 1*a*.

Breaks off in the second Paricchēda.

A well-known work on poetics and rhetoric. Its authorship is attributed to King Bhōjadēva of Dhārā. It contains five Paricchēdas, viz., (१) दोषगुणविवेचन, (२) शब्दालङ्कार, (३) अर्थालङ्कार, (४) उभयालङ्कार, (५) रसविवेचन. For a detailed description of the work, see Aufrecht's Oxford Catalogue under No. 489 and Rājēndralāla Mitra's Catalogue under No. 3143.

**Beginning :**

ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयम् ।
यस्याः सूक्ष्मादिभेदेन वाग्देवीं तामुपास्महे ॥
निर्दोषं सगुणं काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति ॥
दोषाः पदानां वाक्यानां वाक्यार्थानां च षोडश ।
हेयाः काव्ये कवीन्द्रैर्ये तानवादौ प्रचक्ष्महे ॥
असाधु चाप्रयुक्तं च कष्टं चानर्थकं च यत् ।
अन्यार्थकमपुष्टार्थमसमर्थं तथैव च ॥
अप्रतीतमथ क्लिष्टं गूढं नेयार्थमेव च ।
संदिग्धं च विरुद्धं च प्रोक्तं यच्चाप्रयोजकम् ॥
देश्यं ग्राम्यमिति स्पष्टाः दोषाः स्युः पदसंश्रयाः ।
अथैषां लक्षणं सम्यक् सोदाहरणमुच्यते ॥
शब्दशास्त्रविरुद्धं यत्तदसाधु प्रचक्षते ।

यथा—

भूरिभारभराक्रान्तो बाधति स्कन्ध एष ते ।
तथा न बाधते स्कन्धो यथा बाधति बाधते ॥

अत्र बाधतेरात्मनेपदित्वाद्बाधते इति स्यात्, न पुनर्बाधतीति ।

* * * *

**Colophon :**

इति महाराजाधिराजभोजराजदेवेन विरचिते सरस्वतीकण्ठाभरणालङ्कारे गुणविवेचनं नाम प्रथमः परिच्छेदः ॥

**End :**

स्थितेनागन्तुकं हन्यादीप्सितेन विभाजयेत् ।
तद्भेदास्ते भवन्त्येवमन्येष्वपि च योजयेत् ॥

यानं यातीति या काचिच्च या । गिरणं गृणातीति च गीः । शरणं श्रीः, श्रृणातीति श्रीः । श्रयतीति शोभा लक्ष्मीश्च श्रीः । ध्यानं ध्यायतीति बुद्धिर्धीः स्त्र्येव स्त्री, स्तृणातीति स्त्री । ह्रीच्छतीति माया लज्जा च ह्रीः । बिभेतीति भयकामो भयं च भीः । ज्वरो गतिर्जरा च जूः । मुर्च्छा मोहसमुच्छ्राययाः बन्धनं च मूः । त्वरा हिंसा त्वरते च तूः ।

No. 12963. सरस्वतीकण्ठाभरणव्याख्यानम्—रत्नदर्पणम्.
SARASVATĪKAṆṬHĀBHARAṆAVYĀKHYĀNAM: RATNADARPAṆAM.

Substance, paper. Size, 14 × 4⅜ inches. Pages, 256. Lines, 9 on a page. Character, Dēvanāgarī. Condition, injured. Appearance, old.

Breaks off in the third Paricchēda.

A commentary on the Sarasvatīkaṇṭhābharaṇa described under the previous number. The author is Rāmasiṁhadēva according to the introductory stanzas and Ratnēśvara according to the colophon; but in a Benares edition, dated Samvat 1942, of this work wherein the first three Paricchēdas are printed the commentary is said to have been written by Ratnēśvara at the command of Rāmasiṁhadēva.

**Beginning:**

एकेन यस्य यमिनः प्रमदेव देहमर्धेन राजति पुमानिव चापरेण ।
तत्त्वक्रमादथ च न प्रमदा पुमान्वा श्रेयांसि वर्धयतु स स्मरशासनो वः ॥
श्रीरामसिंहदेवेन दोर्दण्डदलितद्विषा ।
क्रियतेऽवन्तिभूपालकण्ठाभरणदर्पणः ॥
कण्ठाभरणमनर्घं वाग्देवी रत्नदर्पणोत्सङ्गे ।
अस्मिन् पश्यतु निभृतं प्रकाशसर्वाङ्गलावण्यम् ॥

ग्रन्थारम्भे समुचितेष्टदेवतानमस्कारेण शिष्टाचारमनुवर्तते—ध्वनिरिति । वाचामधिष्ठात्री देवी द्योतमाना स्वप्रकाशशब्दब्रह्मरूपा भारती कथमुपास्यते । सूक्ष्मादिभेदेन ध्वन्यादिभेदेन च विवक्षितो नमस्कारः । शब्दब्रह्मणश्चतस्रो भिदा भवन्ति—सूक्ष्मा पश्यन्ती मध्यमा वैखरी चेति । तत्राविकारदशा सूक्ष्मा । सा हि सर्वस्य प्राणापानान्तरालवर्तिनी विगतप्रादुर्भावतिरोभावा सम्यक् प्रयोगपरिशीलनात्मना कर्मयोगेन मननादिना ज्ञानयोगेन च सम्यगधिगम्यते ।

* * * *

**Colophon:**

इति श्रीमिश्ररत्नेश्वरविरचिते रत्नदर्पणनाम्नि सरस्वतीकण्ठाभरणविवरणे दोषगुणविवेचनो नाम प्रथमः परिच्छेदः ॥

**End :**

तदयमर्थः--- उद्भूतचमत्कारिसादृश्ययोर्वैरस्योक्तिर्व्यतिरेकः । स्वरूपाख्यस्तु भेदो नास्त्येवेत्युक्तम् । विभागं दर्शयति—स्वजातीयेति । येन रूपेण वैयतिरेक्यमुपादीयते.

---

## No 12964. साहित्यकल्लोलिनी.
## SĀHITYAKALLŌLINĪ.

Substance, paper. Size, $8\frac{3}{4} \times 6\frac{1}{2}$ inches. Pages, 174. Lines, 16 on a page. Character, Telugu. Condition, good. Appearance, new.

Complete.

A treatise on poetics: by Bhāṣyakārācārya, a descendant of **Varadaguru** of Śrīvatsagōtra, and a resident of Bhūtapurī or Śrīperumbūdūr. The stanzas have been taken copiously from other rhetorical works, such as the Kāvyaprakāśa, the Bhāvaprakāśika, etc. The author states that he has consulted the works, Rasārṇavasudhākara of Siṅgabhūpa, **Daṇḍin's** work, etc.

The topics dealt with in the work are—

प्रबन्धभेदनिरूपणम्, क्षुद्रप्रबन्धनिरूपणम्, दृश्यप्रबन्धनिरूपणम्, नाट्यनृत्तनृत्यनिरूपणम्, वस्तुनिरूपणम्, सन्धिनिरूपणम्, नायकनिरूपणम्, रूपकारम्भनिरूपणम्, रूपकनिरूपणम्, उपरूपकनिरूपणम्, काव्यलक्षणम्.

**Beginning :**

श्रीस्तनन्यस्तकस्तूरीमुद्रितोरःस्थलं महः ।
कल्याणायास्तु तापिञ्छगुच्छसच्छायवर्ष्म तत् ॥
काव्यं नाम कवीन्द्राणां महतां च महौजसाम् ।
एकश्लोकमयी मूर्तिरेधते भुवनत्रये ॥
काव्यबन्धेन संबद्धाः काङ्क्षणीया हि कीर्तयः ।
. . . . . . कृत्स्ननाशेऽपि कीर्तयः ॥
वाल्मीकीयेन काव्येन वर्धते ना(रा)मकीर्तनम् ।
बाणस्य काव्यबन्धेन श्रीहर्षः ख्याप्यतेऽधुना ॥
न चर्येण न दानेन नाचारेण न विद्यया ।
प्रतिष्ठां लभते कीर्तिः काव्येनैव यशस्विनाम् ॥
कल्पान्तरस्थिरं काव्यं स्यान्न चेदवलम्बनम् ।
कीर्तिवल्ली स्वर्गफला किमवष्टभ्य तिष्ठति ॥

आदिराजयशोबिम्बमादरात् (र्शं)प्राप्य वाङ्मयम् ।
तेषामसन्तिस्था(न्निधा)नेऽपि न स्वयं पश्य नश्यति ॥
इदमन्धं तमः कृत्स्नं जायते भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं तु(न) दीप्यते ॥

तथाच—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेनरक्षतये ।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥

इति काव्यप्रकाशिका । अत्र तादर्थ्ये चतुर्थी सर्वत्र बोध्या । व्यवहारविदे राजादिषु उचिताचारादिपरिज्ञानाय । शिवेतरस्य पापादिरूपस्य क्षतये नाशाय ।

* * * *

रसाकरसुधाकरं मह(भव)ति शिङ्गपृथ्वीपति-
प्रणीतमपि भूभुजा प(प्र)तिकृतं कृतिं दण्डिनः ।
तथा रससरूपकाण्यपि बहूनि काव्यामृता-
न्युदारकविनिर्मितान्यपि विलोक्य संगीतकम् ॥
अशेषविबुधावनीसरसमानसाम्भोरुह-
प्रबोधनविभातभास्करकराङ्कुरे भास्करे ।
यतीन्द्रकरुणारसोल्लसितशेमुषीनिर्मिते
निबन्ध(न)मणौ मया निखिलकाव्यलक्ष्मोदिनम ॥

**Colophon:**

प्रबन्धविशेषनिरूपणं नाम प्रथमः कल्लोलः ॥

साहित्याध्वनिता(न्त)खिन्नमनःमासेतुशीताचल-
क्षाणीमण्डलमध्यवर्तिविदुषामामोदिनी चेतसः ।
जीवाद्युक्तिविवेकजालनिकरैः संशोधिता निस्तुलै-
र्गम्भीरा मधुरापि बोधजननी साहित्यकल्लोलिनी ॥

प्रथमकल्लोलिनी समाप्ता ॥

**End:**

शब्दचित्रं यथा—

तरुणारुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरीक्षात्मा कामिनीगण्डपाण्डुताम् ॥

**Colophon:**

इति श्रीवत्सकुलतिलकवरदगुरुवंश्येन श्रीभूतपुरवासिना भाष्यकाराचार्यसूरिणा (विरचितः) साहित्यकल्लोलिन्याख्यालङ्कारग्रन्थः समाप्तः ॥

The scribe adds—

इत्थं श्रीभूतपुरवास्तव्येन श्रीनिवासाचार्येण लिखितेयं कल्लोलिनी ॥

---

No. 12965. साहित्यचिन्तामणिः.
SĀHITYACINTĀMAṆIḤ.

Substance, paper. Size, 13 × 8⅜ inches. Pages, 204. Lines, 20 on a page. Character, Grantha. Condition, good. Appearance, new.

Breaks off in the seventh Paricchēda.

A work in poetics and rhetoric. It is in the form of stanzas together with explanations thereon. According to an interpretation of the colophons the author is Vīranārāyaṇa; but in the work itself he is addressed in the vocative case and praised in several places, as Pratāpa rudra was done in the Pratāparudrīya. The alleged author is the same as the hero of the Vēmabhūpālacaritra or Vīranārāyaṇacaritra of Abhinavabhaṭṭabāṇa. The following subjects are dealt with in the work:—

१. ध्वनिनिरूपणम्.
२. शब्दार्थनिरूपणम्.
३. ध्वनिभेदनिरूपणम्.
४. गुणीभूतव्यङ्ग्यनिरूपणम्.
५. दोषविवेकः.
६. गुणविवेकः.
७. अलङ्कारविवेकः.

**Beginning:**

. . . . . शनानां निर्विघ्नमेव निरवर्तत कार्यकालः ।
तं वारणाननमहं सकलान्तरायविच्छेदकं हृदि भजे सकलार्थसिद्ध्यै ॥

अथेदानीं ग्रन्थकारः स्वग्रन्थस्य प्रयोजनसिद्धये प्रतिपाद्यस्य काव्यस्य प्रयोजनान्याह—

काव्यात्पूजा यशो लाभो वैदग्ध्यमशिवक्षतिः ।
आनन्द उपदेशश्च स्त्रीसंमिततया भवेत् ॥

लोकोत्तरवर्त्मना निपुणस्य कवेः सरसशब्दसंघटनात्मकं यत् कर्म तत्काव्यम् । तस्मात् वाल्मीकिव्यासादीनामिव सकलाराधनीयता । कालिदासादी-

नामिव यशः । भोजादेश्चित्तप्रभृतीनामिव वाञ्छितार्थसिद्धिर्लाभः । वैदग्ध्यं तत्तत्प्रसङ्गोचितसर्वव्यवहारकौशलम् । अशिवक्षतिः मयूरादीनामिव महारोगादिनिवारणम् । आनन्दः विचित्रार्थरसभावचमत्कारः सर्वातिशायिसुखविशेषः । स्त्रीसंमिततया उपदेशश्च भवेत् ।

* * * *

तस्य काव्यस्योत्पत्तिकारणमाह—

स्वाभाविकी या प्रतिभा लोकशास्त्राद्यवेक्षणम् ।
तदेतदुभयं प्राहुः काव्यनिर्माणकारणम् ॥

स्वाभाविकी स्वतः सिद्धा ।

* * * *

जयन्ति जलजासनप्रणयिनीकठोरस्तन-
द्वयद्वयसमाधुरीमधुमुचो वचोरीतयः ।
कलापरिषदुन्मिषत्कुमुदबन्धुनाडिंधमा
विदग्धहृदयध्वनध्वनिचमत्कृतौ यत्कृतौ ॥
वाणीनखमुखमुखरितवीणामाधुर्यधुर्यवाग्वृत्तिः ।
ध्वन्यध्वन्यध्वन्यः पेदकोमटिवेमभूपतिर्जयति ॥

**Colophon:**

इति वीरनारायणीये साहित्यचिन्तामणौ अलङ्कारशास्त्रे ध्वनिनिरूपणं नाम प्रथमः परिच्छेदः ॥

**End:**

आख्यायिकायां शृङ्गारादेर्मधुररसेष्वधिवर्णनया कथायां वीररसादिष्वपि न परुषवर्णादयः । एवमन्यदप्यौचित्यमनुस्मर्तव्यम् ॥

**Colophon:**

इति वीरनारायणीये साहित्यचिन्तामणौ अलङ्कारशास्त्रे गुणविवेको नाम षष्ठः परिच्छेदः ॥

अथालङ्कारान् विवक्षुः तल्लक्षणमाह—

प्रायः स्वतोऽङ्गद्वारेण ये रसस्योपकारकाः ।
तेऽलङ्काराः समाख्याताः कटकाद्या इवात्मनः ॥

* * * *

यत्र वाच्यभेदेन भिन्ना अपि शब्दाः पृथक्प्रासनिरासाय तन्त्रेणोच्चार्यमाणाः परस्परं श्लिष्यन्ति.

## No. 12966. साहित्यचिन्तामणिः.
## SĀHITYACINTĀMAṆIḤ.

Substance, palm-leaf. Size, 18 × 1⅓ inches. Pages, 190. Lines, 10 on a page. Character, Grantha. Condition, injured. Appearance, old.

Breaks off in the seventh Paricchēda.

Same work as the above

---

## No. 12967. साहित्यचिन्तामणिः.
## SĀHITYACINTĀMAṆIḤ.

Substance, paper. Size, 13 × 8½ inches. Pages, 304. Lines, 26 on a page. Character, Grantha. Condition, good. Appearance, new.

Breaks off in the seventh Paricchēda.

Same work as the above. Restored from the MS. described above.

---

## No. 12968. साहित्यचिन्तामणिः.
## SĀHITYACINTĀMAṆIḤ.

Substance, palm-leaf. Size, 14¾ × 1⅞ inches. Pages, 179. Lines, 6 on a page. Character, Grantha. Condition, injured. Appearance, old.

Contains the Paricchēdas four to six.

Same work as the above.

---

## No. 12969. साहित्यदर्पणव्याख्या.
## SĀHITYADARPAṆAVYĀKHYĀ.

Pages, 294. Lines, 12 on a page.

Begins on fol. 1*b* of the MS. described under No. 12471.

Complete in ten Prakāśas.

A commentary on the Sāhityadarpaṇa of Viśvanātha, described under R. No. 443 of the Triennial Catalogue of MSS., Vol. I, Part I-B: by Rāmacaraṇa who gives the date of the work as Śaka 1622. This commentary is apparently the same as that described under No. 2502 of Rājēndra Lāla Mitra's Catalogue.

The MS. is dated: Monday, the 12th day of Śrāvaṇa-Śukla in Samvat 1837, at Bharatanagara of Balavantasiṁha.

**Beginning:**

वागीश्वरीसरसगीतगुणप्रवाहं सारस्वतीसनतसेवितपादपद्मम् ।
हेमाद्रिमारकतशेखरकान्तमीशं वन्दे खगेन्द्रभुजमौलिगतं मुकुन्दम् ॥

श्रीविश्वनाथकविराजकृतिप्रणीतं साहित्यदर्पणमतिस्थगितप्रमेयम् ।
श्रीमद्विधाय चरणं शरणं गुरूणां यत्नेन रामचरणो विवृणोति विप्रः ।
यः परः परगुणप्रकाशने लब्धवर्णनिकरो जयत्यसौ ।
दोषगानरचिताघसश्चया यात्वधः पिशुनराजिरञ्जसा ॥

समग्रसिद्धान्तग्रहव्यग्रमनसामनभिमते प्रकटदोषप्रकरविघटितादरकाव्यादिनिरूपणे सत्यपि अलङ्कारग्रन्थनिकरे तेषामभीष्टमदुष्टकाव्यादिनिरूपणमव्याहतराद्धान्तसन्तानमलङ्कारग्रन्थमारम्भ(भ)माणः प्रथमकारिकायाः सरस्वत्याराधनप्रयुक्तस्वार्थनिर्वाहप्रयुक्तिपरतां प्रकाशयितुमवतरणिकां स्वयमेव ग्रन्थकृदाह— ग्रन्थारम्भ इति । ग्रन्थस्य महावाक्यविशेषस्य आरम्भे आरम्भस्य प्राक्काले आद्यकृतिरूपस्यारम्भस्य मङ्गलाचरणाधिकरणत्वबाधादियं लक्षणा तत्प्रयोजनश्च मङ्गलारम्भयोरव्यवहितत्वबोधः । केचित्तु आरम्भे भाविनि सतीत्यर्थ इत्याहुस्तन्न ।

**End:**

वस्तुतस्तु मुखचन्द्रं पश्यामीत्यादौ यथा समासद्वयसम्भवात् सन्देहः, तथात्रापि महिअसाभीइएस्विति(?) प्राकृतमोनिशब्दद्वयसम्भवात् सन्देह एवेत्यवध्येयम् । एवञ्च एकपदवृत्तिसङ्करस्योदाहरणं संसारध्वान्तविध्वंसहंस इत्याद्यवगन्तव्यम् । यथा वा—

मनो विद्धं सरोजाक्षि स्मरशक्त्या सुनिर्भरम् ।
सा चेद्विसृजते गाढं स्वास्थ्यमालम्बते खलु ॥

इत्याद्युदाहरणमुन्नेयमिति ॥

**Colophon:**

इति साहित्यदर्पणविवृत्तौ दशमः प्रकाशः ॥

अक्षिपक्षरसचन्द्रसंमिते हायने शकवसुन्धरापतेः ।
श्रीलरामचरणाग्रजन्मना दर्पणस्य विवृतिः प्रकाशिता ॥

दोषं कञ्चन वीक्ष्य सूक्ष्ममतयो द्वित्राश्शपन्त्यत्र चेत्
तन्मां न व्यथयेद्गुरोरपि गिरो निर्दूषणा दुर्वचाः ।
छात्राणां मतिमादधाति यदसौ गूढार्थसन्दीपना-
दानन्दं वितनोति यद्गुणविदां तेनास्म्यमोघश्रमः ॥

मन्मानसाम्बुजद्वन्द्वे सेव्यमानं मुनीश्वरैः ।
वाञ्छाकल्पतरुं वन्दे रामचन्द्रपदद्वयम् ॥

## No. 12970. साहित्यरत्नाकरः.

SĀHITYARATNĀKARAḤ.

Pages, 156. Lines, 8 on a page.

Begins on fol. 1*a* of the MS. described under No. 1375.

Complete.

Same work as that described under R. No. 306 of the Triennial Catalogue of MSS., Vol. I, Part I-A. By Dharmasudhī.

## No. 12971. साहित्यरत्नाकरः.

SĀHITYARATNĀKARAḤ

Substance, palm-leaf. Size, 18 × 1¼ inches. Pages, 70. Lines, 5 on a page. Character, Grantha. Condition, injured. Appearance, old.

Imperfect and disorderly.

Same work as the above.

The former owner of the MS. is stated to be Śrīnivāsācār and Nārāyaṇācār.

## No. 12972. साहित्यरत्नाकरः.

SĀHITYARATNĀKARAH.

Substance, palm-leaf. Size, 14¾ × 1¼ inches. Pages, 147. Lines, 9 on a page. Character, Grantha. Condition, slightly injured. Appearance, old.

Breaks off in the ninth Taraṅga.

Same work as the above.

## No. 12973. साहित्यरत्नाकरः.

SĀHITYARATNĀKARAḤ.

Substance, palm-leaf (Śrītāla). Size, 8¾ × 2 inches. Pages, 70. Lines, 8 on a page. Character, Grantha. Condition, good. Appearance, old.

Contains the tenth Taraṅga only.

Same work as the above.

## No. 12974. साहित्यरत्नाकरव्याख्या—नौका.

SĀHITYARATNĀKARAVYĀKHYĀ : NAUKĀ.

Pages, 72. Lines, 24 on a page.

Begins on fol. 307*a* of the MS. described under No. 5775.

Breaks off in the second Taraṅga.

Same work as that described under R. No. 444 of the Triennial Catalogue of MSS., Vol. I, Part I-B, but without the introductory stanzas By Vēṅkaṭasūri.

## No. 12975. साहित्यरत्नाकरव्याख्या —नौका.

## SĀHITYARATNĀKARAVYĀKHYĀ : NAUKĀ.

Pages, 25. Lines, 26 on a page.

Begins on fol. 233*a* of the MS. described under No. 11904.

Contains the first Taraṅga incomplete.

Same work as the above.

---

## No. 12976. अलङ्कारनिकषः.

## ALAṄKĀRANIKAṢAḤ.

Substance, paper. Size, 13 × 8⅓ inches. Pages. 246. Lines, 22 on a page. Character, Grantha. Condition, good. Appearance, old.

Complete.

A short treatise on the Arthālaṅkāra. The author, according to the colophon, is Sudhīndrayōgin, and says that he has followed the views of the ancient and the modern rhetoricians on the subject and illustrates them by means of examples eulogizing the virtues of Sudhīndrayōgin, who is made out to be a follower of the Mādhva sect.

**Beginning :**

पायाद्वः प्रेमकोपावसरविसृमरात्संभ्रमान्नम्रमौलेः
चूडाचन्द्रो मृडानीचरणनखदलापूरितार्धे पुरारेः ।
यस्यालोकेन राकारजनिकरपरीवारपारीणमूर्तेः
प्रत्यासीदत्प्रसादां प्रभुरनुनयति प्रेयसीमप्रयासात् ॥
उच्चावचभेदानां कुर्वेऽलङ्कारनिकषनामानम् ।
अर्थालङ्काराणां सङ्ग्रहमभिनवमभङ्गुरप्रौढिम् ॥
प्राचामर्वाचामपि पन्थानं प्रायशोऽनुरुन्धानः ।
वितनोमि लक्ष्यलक्षणविभागभेदव्यवस्थितिं सकलाम् ॥
श्रीमत्सुधीन्द्रसंयमिपुङ्गवगुणकथनगुम्फितगरिम्णः ।
ललितानुदाहरामि श्लोकान् कृतिलोकविरचितश्लाघान् ॥
तत्रालङ्काराणां रूपकदृष्टान्तदीपकादीनाम् ।
उपजीव्यानेकेषामुपमा तावन्निरूप्यते सैषा ॥

तत्र निरूपणीयेष्वर्थालङ्कारेषु स्वयमनेकालङ्कारबीजभूतेयमुपमा प्रथमतो निरूप्यते ।

**End :**

इति प्रौढाङ्गनाबद्धरतिलोलस्य रागिणः ।
कस्याश्चिदिह बालायामिच्छा वृत्तिर्विभाव्यते ॥

इति समासोक्तिलक्षणोदाहरणयोर्दर्शितत्वात् । सादृश्य . . . . . . शंसा तु तन्मते स्तुतिपर्यवस

*　　*　　*　　*

प्रस्तुतप्रशंसासामान्यलक्षणस्य स्तुतिपर्यवसायिनस्स्या . . . . रणस्य च तेन दर्शितत्वात् सुखं जीवन्तीत्येतच्च ।'

**Colophon:**

अलङ्कारशास्त्राभ्यासेच्छूनामत्यन्तोपकाराय श्रीमत्सुधीन्द्रयोगिविरचितालङ्कारनिकषाख्योऽयं ग्रन्थः ॥

---

No. **12977.** अलङ्कारविषयः.

ALAṄKĀRAVIṢAYAḤ.

Pages, 16. Lines, 6 on a page.

Begins on fol. 33*a* of the MS. described under No. 12838.

Wants the beginning and the end.

A brief treatise explaining the different kinds of Alaṅkāras with illustrations thereof. The names of the work and of the author are not known.

**Beginning:**

अलङ्कारः—

उपमानोपमेययोर्गुणलेशतस्साम्यमुपमा ।

उत्कृष्टगुणमुपमानम्, न्यूनगुणमुपमेयम्, उदाहरणम्—

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुस्सनिर्झरोद्गार इवाद्रिराजः ॥

**End:**

पूर्वापरजन्मनोः प्रणामाभावे . . . . . . . . . . . . वाक्यार्थता पर्यायोक्तिः—

अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये ।
यत्प्रकारान्त . . . . पर्यायोक्तिस्तदिष्यते ॥
दंशत्यसौ परभृ.

---

No. **12978.** अलङ्कारेन्दुशेखरः.

ALAṄKĀRENDUŚEKHARAḤ.

Pages, 32. Lines, 16 on a page.

Begins on fol. 137*a* of the MS. described under No. 1782.

Contains the first Prakaraṇa complete.

Date of transcription: 30th July 1831.

This is an original treatise on poetics and rhetoric, and the topics dealt with are mentioned in a stanza extracted below from the beginning. The author is Nṛsiṁhakavi or Vēṅkaṭanṛsiṁhakavi, son of Dāsamācārya of Śrīśaila family. He mentions that he wrote a commentary on the Śāntavilāsa, a work on music composed by Subrahmaṇyasudhī alias Hariśābakavīndra, son of Harirāya and grandson of Kṛṣṇarāya, a resident of the Cariṣṇusāla village. He refers, among others, to his own work Campujānakipariṇaya and to the Gītamañjarī of Hariśābakavīndra. He is the same as the commentator of the Lakṣaṇamālikā described under No. 12953.

**Beginning :**

वन्दे मानसमन्दिरास्थितममुं वन्दारुमन्दारकं
कुन्दाभामलमन्दहासमधुरं मन्दाकिनीसुन्दरम् ।
कन्दर्पाधिकदर्पदारितमुनिस्त्रीबृन्दसन्दानितं
मन्दातीतगुणास्पदं बुधजनानन्दं निदानं मुदाम् ॥
कल्याणं कल्याणाचलधर्मधरो धरात्मजाकमनः ।
विरचयतु राजमौलिः परमहिमक्ष्माभृदीशलैरस्थाङ्घ्रिः ॥

* * * *

सुमनःपरिषल्लाल्यसुधर्माभ्युदयाञ्चितम् ।
चरिष्णु सालनामास्ति पुरं सुरपुरोपमम् ॥
तस्मिन्नासेतुशीताचलविततयशास्सर्वसर्वंसहेश-
श्रेणीमाणिक्यमौलिव्रजकलितशिरोलालितामूल्यभूमा ।
श्रीमान् धीमद्वरेण्यप्रणुतगुणगणस्वादुमाध्वीकधारा-
धुर्योदारात्मसूक्तिर्व्यलसदसदृशः कृष्णरायार्यवर्यः ॥
श्रीकृष्णार्यकुमारकाग्र्यहरिरायाभिख्यविद्वत्सुतः
सुब्रह्मण्यसुधीस्सदाशिवकृपाशुम्भत्कवित्वोन्नतिः ।
काव्यालङ्कृतिशब्दतर्कनिगमान्ताश्वत्पुराणार्थवित्
स्मर्ताभ्यञ्चति यः करामलकितस्कान्दोक्तषट्संहितः ॥
रसभावविदग्रणीस्समञ्चद्रससाहित्यलसत्सुगीतवेत्ता ।
भरतागमपारगः कलावानिति विद्वन्निवहेन गीयते यः ॥
स एव शेषाहिरिव प्रगल्भवाचा रसाचान्तसुधारसौघः ।
गीतप्रबन्धं ललितानुबन्धं शान्ताविलासाभिधमाततान ॥

शान्ताविलासाख्यकृतेर्मुख्यां व्याख्यां विधाय यः ।
हरिशाबकवीन्द्रस्य प्रीतिपात्रं बभूव च ॥

हरिपण्डितरायतनयत्वेन हरिशाब इति सुब्रह्मण्यरायस्यैव नामान्तरम्, तत्कृतशान्ताविलासाख्यगीतप्रबन्धे प्रतिगीतमपि प्रतिपादितम् ।

तेनेह शैलवंश्येन नृसिंहार्येण निर्मितः ।
आर्यानन्दकरो भूयादलङ्कारेन्दुशेखरः ॥
सन्त्येव लोके प्रथितैः कवीन्द्रैः कृता रसालङ्कृतिसत्प्रबन्धाः ।
तथापि बालप्रतिबोधनाय कुर्वे मृदुं लक्षणलक्ष्यवर्गम् ॥

अत्रेयं ग्रन्थे वक्तव्यानामनुक्रमणिका—

आदौ नायकलक्षणं तदनु सत्काव्यस्वरूपं ततः
शृङ्गाराख्यरसश्च[1] दोषगुणयोरुक्तिं च शब्दार्थगाम् ।
वाच्यालङ्कृतयस्सहैव गदितास्संसृष्टिभिस्सङ्करै-
रेवं पञ्चभिरञ्चितं प्रकरणैः शास्त्रं बुधाः पश्यत ॥

तत्रादौ सर्वरसालङ्काराद्याश्रयभूतस्य काव्यस्यावश्यकर्तव्यतां प्रतिपादयति—

श्रेयसां भवति भूयसां पदं चेतनस्य भुवि मानुषं जनुः ।
साहिती यदि घटेत तत्र सा सौरभं परममेव भर्मणः ॥
भाति विद्रुमलताङ्कुरे यथा पद्मरागकलिका नवोदिता ।
शक्तिरस्ति यदि काव्यनिर्मितौ तत्फलं हि तपसां महीयसाम् ॥

* * * *

**Colophon:**

इति श्रीशैलकुलतिलकस्य श्रीदासमाचार्यस्य तनयेन तच्चरणनलिनयुगानुग्रहलब्धसरससाहित्यविलासेन वेङ्कटनृसिंहकविना विरचिते अलङ्कारेन्दुशेखरनाम्नि रसालङ्कारशास्त्रे नायकप्रकरणं समाप्तम् ॥

---

No 12979. काव्यलक्षणविचारः.

KĀVYALAKṢAṆAVICĀRAḤ.

Substance, palm-leaf. Size, 18 × 1½ inches. Pages, 46. Lines, 6 on a page. Character, Grantha. Condition, injured. Appearance, new.

Wants the beginning and the end.

A treatise on poetics. The author, whose name is not known, gives quotations from various works, such as the Kāvyaprakāśa, the Rasagaṅgādhara, the Citramīmāṃsā, etc., and discusses them.

---

[1] शृङ्गारादिरसश्च—इति पाठान्तरम्.

**Beginning:**

नन्विदं काव्यलक्षणमपौरुषेयेषु यथा वै श्येनो निपत्यादत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते, त्रिंशदस्या जघनं योजनानीत्यादिवाक्येष्वतिप्रसक्तम् । तेषामपि गुणालङ्कारसहितत्वान्निर्दुष्टत्वाच्च तथा पौरुषेये च,

* * * *

अत एवोक्तं चित्रमीमांसायाम्—कविसमयः प्रसिद्ध्यनुरोधेन हृद्यतया काव्यशोभाकर एवालङ्कारभावं भजते । अतो गोसदृशो गवय इति नोपमा । गौर्वाहीक इति न रूपकम् । स्थाणुर्वा पुरुषो वेति न सन्देह ।

**End:**

तन्मतेऽपि इतरान्वितस्वार्थाभिधायकवाक्यस्य स्वार्थसन्निकृष्टपदार्थाभिधानेऽपि असमर्थस्य कुतः प्रतीयमानार्थान्तराभिधाने सामर्थ्यमिति व्यञ्जनोपादानमावश्यकमिति तदुक्तमनन्वयाभिहितार्थे स्वयं पदार्थान्तरमात्रेणान्विताभिधाने स्वरविशेषस्त्ववाच्य एवेति । उभयमतेऽप्यवाच्य एव वाक्यार्थ इति । अलमसद्भिरेतादृशैः ॥

---

## CLASS XII—MUSIC AND DANCING.

---

### No. 12980. अभिनयदर्पणम्.
### ABHINAYADARPAṆAM.

Pages, 16. Lines, 24 on a page.

Begins on fol. 99*a* of the MS. described under No. 1552.

Complete.

A treatise on the art of gesticulation by means of the movement of the hands, the neck, etc. A list of the subjects dealt with is given below. The authorship of the work is attributed to Nandikēśvara.

असंयुतहस्ताः.
संयुतहस्ताः.
देवताहस्ताः.
दशावतारहस्ताः.
बान्धव्यहस्ताः.
दृष्टिभेदाः.
सप्तदृष्टिलक्षणम्.
ग्रीवाभेदाः.
नाट्यलक्षणम्.
पात्रलक्षणम्.
सभालक्षणम्.
सभानायकलक्षणम्.
रङ्गे नटनर्तकादिस्थानम्

**Beginning:**

अथेदानीन्तु हस्तानां लक्षणञ्चोच्यते मया ।
असंयुतास्संयुताश्च हस्ता द्वेधा प्रकीर्तिताः ॥

पताकस्त्रिपताकोऽर्धपताकः कर्तरीमुखः ।
मयूराख्योऽर्धचन्द्रश्च अरालः शुकतुण्डकः ॥
मुष्टिश्च शिखराख्यश्च कपिद्ध(त्थ)कटकामुख ।
सूचीचन्द्रकलापद्मकोशसर्पशिरस्तथा ॥
मृगशीर्षस्सिंहमुखः लाङ्गूलस्सालपद्मकः ।
चतुरो भ्रमरश्चैव हंसाख्यो हंसपक्षकः ॥
सन्दंशो मुकुलश्चैव ताम्रचूडस्त्रिशूलकः ।
इत्यसंयुतहस्तानामष्टाविंशतिरीरितः ॥

**End:**

एवंविधस्सभानाथः प्राङ्मुखो निवसेन्मुदा ।
वसेयुः पार्श्वतस्तस्य कविमन्त्रिसुहृज्जनाः ॥
तदग्रे नटनं कार्यं तत्स्थलं रङ्गमुच्यते ।
रङ्गमध्ये स्थिते पात्रे तत्समीपे नटोत्तमः ॥
पार्श्वद्वन्द्वे तालधारी दक्षिणे च मृदङ्गकः ।
तयोर्मध्ये गीतकारः श्रुतिकारस्तदन्तिके ॥
एवं दृष्टः क्रमेणैव नाट्यकारम्भमण्डले ।

**Colophon:**

इति नन्दिकेश्वरभरते अभिनयदर्पणं समाप्तम् ॥

---

No **12981.** अभिनयदर्पणम्.

ABHINAYADARPAṆAM.

Substance, paper. Size, $7\frac{7}{8} \times 6$ inches. Pages, 22. Lines, 22 on a page. Character, Telugu. Condition, injured. Appearance, old.

Wants the beginning; otherwise complete. Contains a few topics not dealt with in the MS. described above.

Similar to the above.

---

No. **12982.** अभिनयदर्पणम्.

ABHINAYADARPAṆAM.

Substance, palm-leaf. Size, $14\frac{1}{8} \times 1\frac{1}{4}$ inches. Pages, 12. Lines, 6 on a page. Character, Telugu. Condition, injured. Appearance, new.

Incomplete. Contains the Asaṁyuta, the Saṁyuta and the Nṛtta-hasta Prakaraṇas.

Similar to the above.

## No. 12983. अभिनयदर्पणम्, आन्ध्रटीकासहितम्.
## ABHINAYADARPAṆAM WITH TELUGU ṬĪKĀ.

Substance, paper. Size, $12\frac{1}{8} \times 7\frac{7}{8}$ inches. Pages, 25. Lines, 34 on a page. Character, Telugu. Condition, injured. Appearance, old.

Begins on fol. 1*a*. The other work herein is Abhinayaśāstra (Kōhalīya) 13(*a*), Abhinayaśāstra (different) 17(*a*).

Contains the Hastādhyāya only complete.

Similar to the above, but with Telugu meaning.

---

## No. 12984. अभिनयदर्पणम्, आन्ध्रटीकासहितम्.
## ABHINAYADARPAṆAM WITH TELUGU ṬĪKĀ.

Substance, paper. Size, $11\frac{7}{8} \times 8\frac{1}{8}$ inches. Pages, 41. Lines, 27 on a page. Character, Telugu. Condition, good. Appearance, old.

Begins on fol. 257*a*. The other works herein are Ānandaraṅgacchandassu 1*a*, Lakṣaṇasārasaṅgrahamu (Rēphaprakaraṇa) 76*a*, Kāvyālaṅkāracūḍāmaṇi 108*a*, Āndhrabhāṣābhūṣaṇamu 1ı0*b*, Āndhranāmasaṅgrahamu 195*b*, Āndhranāmaśēṣamu 243*b*, Tāladhyāya 278*b*, Mṛdaṅgalakṣaṇa 285*a*, Vāstuśāstram 297*a*, Viśvabrahmapurāṇamu (Vacanamu) 333*b*.

Contains the Asaṁyuktahastaprakaraṇa incomplete.

Similar to the above.

---

## No. 12985. अभिनयदर्पणम्, आन्ध्रटीकासहितम्.
## ABHINAYADARPAṆAM WITH TELUGU ṬĪKĀ.

Substance, palm-leaf. Size, $14\frac{5}{8} \times 1\frac{1}{8}$ inches. Pages, 110. Lines, 4 on a page. Character, Telugu. Condition, good. Appearance, old.

Begins on fol. 1*a*. The other works herein are Tāladhyāya 56*a*, Mṛdaṅgalakṣaṇa 70*a*, Tālaviṣayamu 75*a* (all with Telugu meaning).

Contains the Asaṁyuktahastapıakaraṇa incomplete.

Similar to the above

---

## No. 12986. अभिनयशास्त्रम्.
## ABHINAYAŚĀSTRAM.

Substance, paper. Size, $8\frac{1}{4} \times 6\frac{1}{2}$ inches. Pages, 24. Lines, 17 on a page. Character, Telugu. Condition, fair. Appearance, new.

Begins on fol. 1*a*. The other works herein are Bharatārṇava 13*a*, Nṛttatālalakṣaṇa 30*a* (with Telugu meaning).

Incomplete ; wants the beginning.
Similar to the above.

**Beginning :**

मध्यमानामिका चापि कनिष्ठाश्चेति ताः क्रमात् ।

हस्तभेदाः—

पताकस्त्रिपताकोऽर्धचन्द्राख्यः कर्तरीमुखः ।
अरालमुष्टिशिखरः कपित्थः कटकामुखः ॥
शुकतुण्डं च लाङ्गूलः पद्मकोशोऽलपल्लवः ।
सूचीमुखस्सर्पशिरः चतुरो मृगशीर्षकः ॥
हंसास्यं हंसपक्षं च भ्रमरो मुकुलं तथा ।
पूर्णनाभं च सन्दंशं ताम्रचूडः परं करः ॥
असंयुता मता हस्ताः चतुर्विंशतिरित्यपि ।
अभिनेयवशादेषां संयुतत्वमपीष्यते ॥

**End :**

भरतस्य वचः श्रुत्वा प्रत्यूचुर्नयतरस्तथा ।
भगवन् श्रोतुमिच्छामि अर्चनं रङ्गपूजनम् ॥
आध्रिया(दरे)णास्य शास्त्रस्य लक्षणं यच्च पूजनम् ।

---

No. **12987.** अभिनयशास्त्रम्.
ABHINAYAŚĀSTRAM.

Substance, paper. Size, 9⅓ × 7 inches. Pages, 15. Lines, 22 on a page. Character, Telugu. Condition, fair. Appearance, new.

Begins on fol. 1*a*. The other works herein are Bharatārṇava 8*a* and 28*a* (with Telugu meaning), Bharatārthacandrikā 23*b* (with Telugu meaning), Nṛttatālalakṣaṇa (with Telugu notes) 36*b*.

Incomplete ; wants the beginning.
Similar to the above.

**Beginning :**

. . . . . . . . कश्चिन्निपुणसम्मतः ।
गायको गायनीपात्रं प्रवेशे नृत्यमन्दिरे ॥
ते सर्वे मिलिताः कुर्युः प्रथमं रङ्गवादनम् ।
अनुवृत्तिर्मुखलक्षणं त(तु)लयेन पूरणम् ॥

तालानुवृत्तिरित्येते भवन्ति कुलजा गुणाः ।
अङ्गेनालम्बयेत् गीतं हस्तेनार्थप्रदर्शनम् ॥
चक्षुर्भ्यां भावयेद्भावं पादाभ्यां तालनिर्णयः ।
यतो हस्तस्ततो दृष्टिर्यतो दृष्टिस्ततो मनः ॥
यतो मनस्ततो भावो यतो भावस्ततो रसः ।

ना(ट्याङ्ग)प्रारम्भलक्षणम्—

कुशीलवैर्यत्क्रियते नृत्तादौ तूर्यघोषणम् ।
तदम्बरमिति प्रोक्तं नाट्यशास्त्रविशारदैः ॥
लयानुगोऽल्पनादस्स्यान्मर्दलस्य ध्वनिर्यथा ।
भरतादिभिराचार्यैरायतं तदुदाहृतम् ॥
नाटरागे प्रयुक्ते तु तमालापं जगुर्बुधाः ।
तत्कारं जगदत्तादि . . . . रेव प्रयोजयेत् ॥
आदावन्ते दोदिगाधां मध्ये पाठाक्षरैर्युताम् ।
मोहना रेदिसंज्ञोऽसौ कथितो हरिभूभुजा ॥
तत्कारश्च प्रयोक्तव्यो झम्पातालानुसारतः ।
ततो नाटपदस्यापि प्रयोगो रिदिरिष्यते ॥
आटतालेन तत्कारं नान्द्यन्ते रिदिरिष्यते ।

**End:**

ततो विपर्ययः प्रोक्तस्तिकारस्य मनीषिभिः ॥
तिष्ठतो वामपादस्य गुल्फस्य स्पर्शनं यदि ।
दक्षिणेन पदाग्रेण तागित्तादिति योजयेत् ॥
अङ्गुल्यग्रेण तोकारः तकारश्च उकारवत् ।
पादस्यान्तरपार्श्वेन गुकारश्च डुकारवत् ॥

---

No. **12988.** अभिनयशास्त्रम्, आन्ध्रटीकासहितम्.
ABHINAYAŚĀSTRAM WITH TELUGU ṬĪKĀ.

Pages, 13. Lines, 34 on a page.

Begins on fol. 17*a* of the MS. described under No. 12983.

Contains the Asaṁyutahasta Adhyāya.

Slightly different from that described under No. 12986, but with Telugu meaning.

**Beginning :**

पताकस्त्रिपताकश्चार्धचन्द्रः कर्तरीमुखः ।
अरालमुष्टिशिखरः कपित्थः कटकामुखः ॥
शुकतुण्डश्च लाङ्गूलो पद्मकोशोऽलपल्लवः ।

* * * *

अर्धचन्द्रकरस्सोऽयं पताकाङ्गुष्ठसारणात् ।

* * * *

अर्धचन्द्रोऽर्धचन्द्राख्यबाणे च विनियुज्यते ।
परस्परं युद्धकार्ये अर्धचन्द्रो विधीयते ॥

**End :**

अव्ययानां च केषाञ्चित्कुक्कुटाननदर्शने ।
मयूरप्रमुखाणां च पक्षिणाञ्चापि दर्शने ॥

* * * *

**Colophon :**

इति असंयुतहस्ताध्यायस्सम्पूर्णः ॥

---

No. **12989**. अभिनयशास्त्रम् (कोहलीयम्), आन्ध्रटीकासहितम्.
ABHINAYAŚĀSTRAM (KŌHALĪYAM) WITH
TELUGU ṬĪKĀ.

Pages, 8. Lines, 34 on a page.

Begins on fol. 13*a* of the MS. described under No. 12983.

Incomplete.

Similar to the above. The work is attributed to Kōhala. It is accompanied by a Telugu meaning.

**Beginning :**

तर्जनीमूलसंलग्नमङ्गुष्ठं कुचितो यथा ।
अन्ये चाप्रसृताः श्लिष्टः यत्र सोऽयं पताकिकः ॥

* * * *

नात्यारम्भे वारिवाहे वने वस्तुनिषेधके ।

**End :**

मणिबन्धेन विन्यस्तोऽप्यरालो वर्धमानकः ।
उत्तानो वामपार्श्वस्थः स्वस्तिकः परिकीर्तितः ॥

* * * *

स्वस्तिकादिच्युतीकरणाद्दिशो घनाघनम् ।
समुद्राश्च ऋतुरोहितदो . . . . विस्तीर्णे चाभिनेयं स्यात् ॥

## No. 12990. तालदशप्राणप्रकरणम्, आन्ध्रटीकासहितम्.
## TĀLADAŚAPRĀṆAPRAKARAṆAM WITH TELUGU MEANING.

Substance, paper. Size, $8\frac{3}{8} \times 6\frac{1}{4}$ inches. Pages, 9. Lines, 25 on a page. Character, Telugu. Condition, fair. Appearance, old.

Complete

On the ten-fold essential characteristics relating to musical measure and time. The work was, according to the Telugu heading in the MS., taken from the Svararāgasudhārasa.

**Beginning:**

कालो मार्गक्रियाङ्गानि ग्रहो जातिकलालयः ।
यतिप्रस्तारकं चेति तालप्राणा दश स्मृताः ॥

* * * *

दक्षिणो वार्धिकश्चित्रः अथ चित्रतरोऽपि च ।
चित्रतमोऽतिचित्रश्च षड्विधः कथितो बुधैः ॥

* * * *

आवापोऽप्यथ निष्कामः विक्षेपश्च प्रवेशनम् ।
निःशब्दस्य क्रियाप्येवं भरतज्ञैः प्र(स)मुच्यते ॥

* * * *

ध्रुवश्च झम्पतालश्च सन्निपातस्तथापरः ।
मार्गक्रिया स इत्यष्टौ स शब्दस्य चतुर्विधः ॥

**End:**

समश्रोत्रोवहाख्या च गोपुच्छेत्युच्यते स्थिता ।

* * * *

प्रस्तारसंख्या नष्टश्चोद्दिष्टं पातालकः स्मृतः ।
द्रुतमेरुर्लघुमेरुर्गुरुमेरुः ड्रुतस्य च ॥
मेरुस्संयोगमेरुश्च खण्डप्रस्तारकस्स्मृतः ।
यतिप्रस्तारकश्चैव लक्षणः कथितो बुधैः ॥

**Colophon:**

* * * *

तालदशप्राणलक्षणं संपूर्णम् ॥

No. **12991.** तालप्रकरणम् , आन्ध्रटीकासहितम्.

TĀLAPRAKARAṆAM WITH TELUGU MEANING.

Substance, paper. Size, 8 × 6⅜ inches. Pages, 30. Lines, 21 on a page.
Character, Telugu. Condition, good. Appearance, old.

A treatise describing the different kinds of Tālas and their forms.

**Beginning:**

त्र्यश्रध्रुवः—

षडक्षरेण लघुना गुरूणां सूर्यवर्णिनाम् ।
द्रुतेन द्व्यक्षरेणापि त्र्यश्रध्रुव उदीरितः ॥

* * * *

चतुरश्रध्रुवः—

चतुर्वर्णेन लघुना गुरुनाष्टाक्षरेण च ।
द्व्यक्षरेण द्रुतेनापि चतुरश्रध्रुवो मतः ॥

* * * *

मिश्रध्रुवः—

सप्ताक्षरेण लघुना गुरूणामनुवर्णिनाम् ।
द्रुतेन द्व्यक्षरेणापि मिश्रध्रुव उदीरितः ॥

* * * *

षडक्षरेण लघुना द्रुतेन द्व्यक्षरं तथा ।
षडाद्यङ्गुलकालांस्त्रीन्मठ्यतालमुदीरितः ॥

* * * *

सप्ताक्षरेण लघुना द्रुतेन द्व्यक्षरं तथा ।
सप्ताक्षरे गुरू कालाः मिश्रमठ्यमुदीरितः ॥

**End:**

खण्डत्रिपुटी—

पञ्चाक्षरेण लघुना द्वन्द्वाक्षरद्रुतद्वयम् ।
द्रुतद्वयानखण्डं च त्रिपुटीतालाङ्गमेव च ॥

* * * *

सङ्कीर्णत्रिपुटी—

सप्ताक्षरेण लघुना द्वन्द्वाक्षरद्रुतद्वयम् ।
द्रुतद्वयेन सङ्कीर्णं त्रिपुटीतालमेव च ॥

* * * *

धपधपमधपमपाधमगरि, पमपमगपमगमपमगरिमगमग

एकताललक्षणम्—

एकाङ्गप्रसृतांश्चैव चतुरक्षरमुच्यते ।
एकतालश्चतुर्थश्च सप्त तालाः प्रकीर्तिताः ॥

---

No. 12992.ताललक्षणम्, आन्ध्रटीकासहितम्.

TĀLALAKṢAṆAM WITH TELUGU COMMENTARY.

Substance, palm-leaf. Size, 13⅝ × 1¼ inches. Pages, 250. Lines, 8 on a page. Character, Telugu. Condition, good. Appearance, old.

Contains the Mārgatālaprastāra.

By Kōbala. Similar to the above and same work as that described under No. 1126 on page 320 of the India Office Library Catalogue. It is followed by meaning in Telugu.

**Beginning:**

कल्याणगुणसम्पन्नं कर्णान्तायतलोचनम् ।
कौसल्यातनयं रामं कलये कमलापतिम् ॥

इह खलु सकलभरतपण्डितमण्डलाखण्डलसकलभरतप्रवर्तकशिखामणिः कोहलाचार्यनामकः परमकारुणिकः कश्चिद्विपश्चित्सकललोकोपकाराय तौर्यत्रिकोपकाराय तौरत्रिकंपदाश्रयत्वेन दशप्राणसमेतं तालस्वरूपं सप्रपञ्चं प्रतिपादयितुकामश्चिकीर्षितस्य निर्विघ्नपरिसमाप्तये सर्वेश्वरनमस्कारात्मकमङ्गलाचरणपूर्वकं चिकीर्षितं प्रतिजानीते—विष्णुमिति ।

* * * *

विष्णुं लोकगुरुं प्रणम्य शिरसा षण्मार्गसन्दर्शकं
कीर्तिप्रीतिकरं जनस्य लघुना कालेन कामप्रदम् ।
सेव्यं सद्यतिभिर्धृतप्लुतपदं न्यासात्तलोकत्रयं
तालानां कथयामि लक्षणमहं पूर्वोक्तशास्त्रक्रमात् ॥

* * * *

तौर्यत्रिकविधानं च तालं कालस्वरूपिणम् ।
दशप्राणसमोपेतं यो जानाति स तत्त्ववित् ॥
शिवशक्त्यात्मकं पुण्यं यस्यस्वं(शस्यं)भुक्तिमुक्तिदम् ।
दशप्राणसमोपेतं यो जानाति स तत्त्ववित् ॥

* * * *

गीतं वाद्यं च नृत्तं च भाति ताले प्रतिष्ठितम् ।
तस्मात्तालस्वरूपं च ज्ञातव्यं तौर्यवेदिभिः ॥

* * * *

ग्रन्थान्तरे—

गीतं वाद्यं च नृत्तं च तालहीनं न राजते ।

* * * *

लोके वेदे च वचसां पादयोर्गतिरुत्तमा ।
तालेनैव विना तेन स्खलनं तेषु दृश्यते ॥

* * * *

तकारः शङ्करः प्रोक्तो लकारः शक्तिरुच्यते ।
शिवशक्तिसमायोगात् तालनामाभिधीयते ॥

* * * *

कालो लघ्वादिमितया क्रियया सम्मितो मितिम् ।
गीतादेर्विदधत्तालस्स च द्वेधा बुधैः स्मृतः ॥

**End:**

तत्राङ्कलेखनं मौलिष्वेकैकं प्रथमं लिखेत् ।
ततः परमधः पङ्क्तिरेकैकं कोष्ठयोर्द्वयोः ॥
तृतीयादिष्वष्टमाङ्कं विहायोपान्त्यपूर्वकान् ।
पञ्चकोष्ठगतानङ्कान् संयोज्यात्र पुनः पुनः ।
लघौ च लविरामे च द्रुतस्यैकं भवेदथ ॥

---

No. **12993.**ताललक्षणम्.

TĀLALAKṢAṆAM.

Substance, palm-leaf. Size, $13\frac{3}{4} \times 1\frac{1}{4}$ inches. Pages, 30. Lines, 6 on a page. Character, Telugu. Condition, good. Appearance, old.

Incomplete.

Similar to the above.

**Beginning:**

चरणनृत्यलक्षणन्तु कामदेवेन—

उद्धता वाद्यवक्त्रेषु . . . . . . . ।
सरसान्दोलनान्नानाप्रसादपदगुम्भनात् ॥
सौराष्ट्रदेशजो यत्र चारणादेन काकुभिः ।

* * * *

करतालैरनुगतं पादन्यासैस्समुद्यतम् ।
भ्रमणैरपि लौहित्यं शून्यं नृत्यं वितन्यते ॥

* * * *

तदुक्तं भावप्रकाशे—

तथापि त्रिविधं नाट्यनृत्यनृत्तप्रभेदतः ।
सुखदुःखात्मकं यत्र लोके नृत्तं निरूप्यते ॥
आङ्गिकाद्यैरभिनयैर्वाक्यार्थाभिनयात्मकम् ।
रसभावसमायुक्तं तन्नाट्यं परिचक्षते ॥

**End:**

अष्टौ काष्ठा निमेषश्च निमेषैरष्टभिः कला ।
कलाभ्यां तु चतुर्भागं चतुर्भागमनुद्रुतम् ॥
अनुद्रुताभ्यां बिन्दुस्स्यात् बिन्दुभ्यां तु लघुर्भवेत् ।
लघुद्वन्द्वं गुरुश्चैव त्रिलघुः प्लुत उच्यते ॥
लचतुष्कं च निःशब्दमित्येते कालनिर्णयः ।
इति कालगतिः प्रोक्ता ता(लानां) पूर्वसूरिभिः ॥

---

No. **12994**. ताललक्षणम्, आन्ध्रटीकासहितम्.

TĀLALAKṢAṆAM WITH TELUGU MEANING.

Substance, paper. Size, $12\frac{1}{8} \times 7\frac{7}{8}$ inches. Pages, 156. Lines, 28 on a page. Character, Telugu. Condition, good. Appearance, old.

Begins on fol. 110*a* The other works herein are Āndhrabhāṣārṇavamu 1*b*, Bhāskaraśatakamu with commentary 193*b*, Sumatiśatakamu with commentary 242*a*, Prasannarāghavaśatakamu 279*a*, Haṁsaladīvi Gōpālaśatakamu 310*a*, Vēmanapadyamu 322*a*.

Incomplete.

Same work as the above.

---

No. **12995.** तालविषयः, आन्ध्रटीकासहितः.

TĀLAVIṢAYAḤ WITH TELUGU MEANING.

Substance, paper. Size, $12 \times 7\frac{3}{4}$ inches. Pages, 51. Lines, 33 on a page. Character, Telugu. Condition, injured. Appearance, old.

On some details connected with musical time and measure.

**Beginning:**

द्वितीयामिन्दुवारेण श्रवणे मकरे तथा ।
नीलवर्णो भरद्वाजः ऋषिर्होरयरसस्तथा ॥

त्रिष्टुप् छन्दो महादेवो देवता श्रवणे कुजः ।
शुक्लपक्षे च सिंहर्क्षे शाल्योदनमधुप्रियम् ॥
कुशद्वीपस्थितश्वेतवस्त्रेण वृतमध्यमम् ।

* * * *

वेदानां प्रणवः श्रेष्ठस्तालानां च विनायकः ॥

**End:**

लघुद्रुतो लघुश्चैव द्रुतद्वन्द्वलघुस्तथा ।
द्रुतत्रयलघुश्चैव मर्मतालस्य लक्षणम् ॥

---

No. **12996.** तालाध्यायः, आन्ध्रटीकासहितः.

TĀLĀDHYĀYAḤ WITH TELUGU MEANING.

**Pages,** 14. Lines, 24 on a page.

Begins on fol. 278*b* of the MS. described under No. 12984.

Incomplete.

Similar to the above. Herein the author enumerates and explains the different kinds of Tālas.

**Beginning:**

ध्रुवो मठ्यो रूपकश्च झम्पा त्रिपुट एव च ।
अटतालैकतालश्च सप्त तालाः प्रकीर्तिताः ॥

* * * *

ध्रुवताले लघुः कार्यः ततश्चैको गुरुर्यतः ॥
मठ्यताले क्रमेणैव जगणश्च प्रकीर्तितः ।
द्रुतमेको लघुश्चैव रूपके च प्रकीर्तितः ॥
झम्पे ताले विरामान्त्यं द्रुतमेको लघुस्तथा ।
त्रिपुटः त्रिविधः प्रोक्तो विरामान्त्यं द्रुतत्रयम् ॥
अटताले लघुद्वन्द्वं द्रुतद्वन्द्वं च कीर्तितम् ।
एकेनैव द्रुतेन स्यादेकतालमितीरितम् ॥

**End:**

विनायकतालम्—

गगगाललहश्चैव गललापसमान्वितम् ।
सर्वविघ्नेऽपि शान्तत्वं भवेत् तालं विनायकम् ॥

## No. 12997. तालाध्यायः, आन्ध्रटीकासहितः.
## TĀLĀDHYĀYAḤ WITH TELUGU MEANING.

Pages, 28. Lines, 5 on a page.

Begins on fol. 56*a* of the MS. described under No. 12985

Incomplete.

Same work as the above.

---

## No. 12998. नाट्यचूडामणिः, आन्ध्रटीकासहितः.
## NĀṬYACŪḌĀMAṆIḤ WITH TELUGU MEANING.

Substance, paper. Size, 10½ × 7¾ inches. Pages, 17. Lines, 19 on a page. Character, Telugu. Condition, good. Appearance, old.

The leaves are put in disorder. The beginning given below is found on fol. 7*b*.

Apparently complete.

A work on dancing and mimic representation and on Svaras (musical notes) and their characteristics. The author is Sōmanārya who is said to have been famous for Aṣṭāvadhāna (attention to eight things at a time). He says that he has written this work in accordance with the views of earlier writers on the subject.

**Beginning:**

नित्यानन्दकरं शान्तं निर्मलाङ्गं सुशोभनम् ।
नीरजपत्रनयनं सीताराममहं भजे ॥
शम्भुर्गौरी तथा ब्रह्मा माधवो नन्दिकेश्वरः ।
दत्तिलः कोहलश्चैव याज्ञवल्क्यश्च नारदः ॥
हनुमान् विघ्नराजश्च षण्मुखोऽपि बृहस्पतिः ।
अर्जुनो रावणश्चैव कन्या बाणसुतस्य च ॥
एते भरतकर्तारस्तत्तत्कर्मप्रयोगतः ।
अन्येषामपि सर्वेषां समाश्रित्यार्थचातुरीम् ॥
अष्टावधानविख्यातसोमनार्येण वक्ष्यते ।
नाट्यचूडामणिर्नाम ग्रन्थो विबुधसंमतः ॥
लोकेषु बहवः सन्ति भरतार्थविशारदाः ।
तेषां मतेभ्यः संगृह्य कुर्यान्नाट्यप्रयोगिणीम् ॥
पूर्वशास्त्रानुसारेण ग्रन्थं शास्त्रशिरोमणिम् ।

लक्ष्यस्वरूपप्राकट्यसिद्धये लक्षणत्रयम् ॥
लक्षणद्वयमेकं वा लक्ष्यलक्ष्मी प्रदर्शयेत् ।

* * * *

गान्धर्वं त्रिविधं गीतवाद्यनर्तनभेदतः ।
नर्तनं त्रिविधं नाट्यनृत्य(त्त)नृत्यप्रभेदतः ।

**End:**

स्वराणां लक्षणं सम्यक् सोमनार्येण कीर्तितः(म्) ।
स्वस्वस्थानविपर्यासात् समस्तव्यासमेव च ।
क्रमात् स्वराणां सप्तानां प्रस्तारोऽयमितीरितः ॥

* * * *

ఈ తీరున షడ్జమ స్వరానుకు, నెమలి, ఆవు, మేక, క్రౌంచపక్షి, కోకిలం, గుర్రం, యేనుగ, [illegible]రుల వీరులనుండి పుట్టెను.

---

## No. 12999. नाट्यशास्त्रम्.
## NĀṬYAŚĀSTRAM.

Substance, paper. Size, $8\frac{5}{8} \times 6\frac{5}{8}$ inches. Pages, 174. Lines, 19 on a page. Character, Telugu. Condition, good. Appearance, old.

Contains the Adhyāyas 4, 6, 7, 8, 15, 16, 20 and 22 complete and the 23rd Adhyāya incomplete.

An ancient work dealing with the art of dancing, singing, gesticulation, dramatic representation, construction and arrangement of theatres, etc. The work is divided into 37 Adhyāyas and has been printed in the Kāvyamālā. The authorship of the work is attributed to Bharata.

**Beginning:**

एवं तु पूजनं कृत्वा मया प्रोक्तः पितामह ।
आज्ञापय प्रभो क्षिप्रं कः प्रयोगः प्रयुज्यताम् ॥
तथेत्युक्तो भगवता पूर्वं योऽमृतमन्थनः ।
एतदुत्थानजननं सुरप्रीतिकरं महत् ॥
योऽयं समवकारस्तु धर्मकामार्थसाधकः ।
मया गृहीतो यो विद्वन् स प्रयोगः प्रयुज्यताम् ॥
तस्मिन् समवकारे तु प्रयुक्ते देवदानवाः ।
हृष्टाः समभवन् सर्वे कामभावानुबन्धनात् ॥

* * * *

एवमेष विधिस्सृष्टः ताण्डवस्य प्रयोगतः ।
भूयः किं कथ्यतां विप्राः नाट्ययोगविधिं प्रति ॥

**Colophon:**

इति भारतीये नाट्यशास्त्रे ताण्डवलक्षणं नाम चतुर्थोऽध्यायः ॥

* * * *

प्रणम्य शिरसा देवौ पितामहमहेश्वरौ ।
नाट्यशास्त्रं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम् ॥
मुनयः ऋषयस्सर्वे पञ्च प्रश्नान् ब्रवीहि नः ।
ये रसा इति पठ्यन्ते नाट्ये नाट्यविवक्षणैः ॥
रसत्वं केन वा तेषां तदाख्यातुं त्वमर्हसि ॥

**End:**

वृत्त्यन्त एषोऽभिनयो यथो(मयोक्तो) पाङ्ग(वागङ्ग)सत्त्वप्रभवो यथावत् ।
आहार्यमेवाभिनयप्रयोगं वक्ष्यामि नैपथ्यकृतं पुनश्च ॥

**Colophon:**

इति भारतीये नाट्यशास्त्रे वृत्तिविकल्पो नाम द्वाविंशोऽध्यायः ॥

सामान्याभिनयो नाम ज्ञेयो वागङ्गसम्भवः ।
सत्त्वे कार्यप्रयत्नस्तु सत्त्वे नाङ्गं(नाट्यं)प्रतिष्ठितम् ॥
सत्त्वातिरिक्तोऽभिनयो ज्येष्ठ इत्यभिधीयते ।
समसत्त्वो भवेन्मध्यस्सत्त्वहीनोऽधमस्स्मृतः ॥

* * * *

दन्तच्छेद्यं नखच्छेद्यं नीवीप्रा(स्रं)सनमेव च ।
स्तनाधरविमर्दं च रङ्गमध्ये न कारयेत् ॥
भोजनं सलिलक्री . . . . . .

---

## No. 13000. नाट्यशास्त्रम्.
## NĀṬYAŚĀSTRAM.

Substance, paper. Size, 8 × 6 inches. Pages, 82. Lines, 20 on a page. Character, Telugu. Condition, fair. Appearance, old.

Contains the Adhyāyas 4 and 6 to 9 complete, and the tenth incomplete.

Same work as the above.

## No 13001. नाट्यशास्त्रम्.
## NĀṬYAŚĀSTRAM.

Substance, paper. Size, 8 × 6¼ inches. Pages. 8. Lines, 24 on a page. Character, Telugu. Condition, fair. Appearance, old.

Contains the seventh Adhyāya incomplete.

Same work as the above.

---

## No. 13002. नृत्तताललक्षणम्, आन्ध्रपद्यसहितम्.
## NṚTTATĀLALAKṢAṆAM WITH TELUGU PADYAS.

Pages, 91. Lines, 17 on a page.

Begins on fol. 30*a* of the MS. described under No. 12986.

Contains the Nṛttādhyāya complete and the Tālādhyāya incomplete.

The work is a compilation chiefly from the Saṅgītaratnākara of Śārṅgadēva and deals with gesticulation and dancing and musical time and measure. Telugu stanzas expressing briefly the topics dealt with in Sanskrit are added then and there

**Beginning:**

आङ्गिकं भुवनं यस्य वाचिकं सर्ववाङ्मयम् ।
आहार्यं चन्द्रतारादि तं नुमः सात्त्विकं शिवम् ॥
सदाशिवः शिवा ब्रह्मा भरतः काश्यपो मुनिः ।
मतङ्गो यष्टिको दुर्गा शक्तिः शार्दूलकोहलौ ॥
विशाखिको दन्तिलश्च कबलोऽश्वतरस्तथा ।
वायुर्विश्वावसू रम्भा नारदोऽर्जुनतुम्बुरू ॥
आञ्जनेयो मातृगुप्तो रावणो नन्दिकेश्वरः ।
स्वातिर्गुणो देवराजः क्षेत्रराजश्चिकं तथा(श्च लोहलः) ॥
रुद्रसेनोऽथ भूपालो भोजभूवल्लभस्तथा ।
परमार्थी च सोमेशो जगदेकमहीपतिः ॥
व्याख्यातारो भारतीये लोलटोद्भटशङ्कराः ।
भट्टोऽभिनवगुप्तश्च श्रीमत्कीर्तिधरः परः ॥
अन्ये च बहवः पूर्वे ये सङ्गीतविशारदाः ।
ये ते सन्तः कृताः सङ्घैः द्वात्रिंशद्भिरतो भुवि ॥

* * * *

गीतं वाद्यं च नृत्तं च त्रयस्सङ्गीतमुच्यते ।
मार्गो देशीति तत् द्वेधा तत्र मार्गस्स उच्यते ॥

ये(यो) मार्गितो विरिञ्चाद्यैः प्रयुक्तो भरतादिभिः ।
देवस्य पुरतः शम्भोः (स नीतोऽभ्युदयक्रमः ॥
तद्देशजननायादि चाहता(तं) यत्र रञ्जनम् ।
गानं च वादनं नृत्तं तद्देशीत्यभिधीयते ॥

नाट्यागमनक्रमः—

नाट्यं नृत्तं च नृत्यं च त्रिधा चापीति नर्तनम् ।
नाट्यवेदं तथा पूर्वं भरताय चतुर्मुखः ॥

**End:**

दण्डपक्षौ तार्क्ष्यपक्षापूर्वमण्डलिनी तथा ।
एते हस्ताः प्रयोक्तव्या नर्तकीजानुमण्डले ॥

**Colophon:**

इति नृत्ताध्यायः ॥

अथ तालाध्यायः—

कालमार्गक्रियाङ्गानि ग्रहजातिकलालयाः ।
येति प्रस्तारकश्चेति तालप्राणा दश स्मृताः ॥

* * * *

एभिर्वर्णैस्समैर्ह्रस्वैः श्लिष्टमन्यत्र निर्मितम् ।
तद्दिङ्गिणादिशब्दोऽन्ते स शब्दः परिकीर्तितः ॥

---

## No. 13003. नृत्तताललक्षणम्.
## NṚTTATĀLALAKṢAṆAM.

Substance, palm-leaf. Size, 17 × 1⅜ inches. Pages, 65. Lines, 6 on a page. Character, Telugu. Condition, injured. Appearance, old.

Begins on fol. 1*a*. The other work herein is Gītagōvindavyākhyā 42*a*.

Incomplete.

Similar to the work described above, and contains Telugu meaning. The stanza here in giving the name of the work as Nṛttatālaka-pūrtana under the authorship of Śārṅgadēva is apparently incorrect inasmuch as the same along with a number of other stanzas are found in the Saṅgītaratnākara where the reading is नर्तनं तापकर्तनं instead of नृत्ततालकपूर्तनम्. Foll. 34 to 41 describe some musical modes.

**Beginning:**

आङ्गिकं भुवनं यस्य वाचिकं सर्ववाङ्मयम् ।
आहार्यं चन्द्रतारादि तं नुमस्सात्त्विकं शिवम् ॥
शिवप्रसादे सम्प्राप्ते निस्सीमज्ञानचक्षुषा ।
तन्यते शार्ङ्गदेवेन नृत्ततालकपूर्त्तनम्(नर्तनं तापकर्तनम्) ॥
सदाशिवः शिवा ब्रह्मा भरतः कश्यपो मुनिः ।
मतङ्गो याष्टिको दुर्गा शक्तिः शार्दूलकोहलौ ॥
विशाखिको दन्तिलश्च कम्बलोऽश्वतरस्तथा ।
वायुर्विश्वावसू रम्भार्जुनो नारदतुम्बुरू ॥
आञ्जनेयो मातृगुप्तो रावणो नन्दिकेश्वरः ।
श्व(स्वा)तिर्गणो देवराजः क्षेत्रपालश्च लोहलः ॥
रुद्रसेनोऽनन्यचोलो भोजभूवल्लभस्तथा ।
वेदव्यासश्च सोमेशो जगदेकमहीपतिः ॥
प्रभाकरो भारतीयो लोल्लटोद्भटशङ्कुराः ।
भट्टाभिनवगोप्ता(गुप्तः) च श्रीमत्कीर्तिधरः परः ॥

**End:**

एकन जगणेनैव मठ्यतालः प्रकीर्तितः ।
* * * *
अभङ्गतालो वा स्यातां सारङ्गैः पूर्वसूरिभिः ।
* * * *
एकतालो . . . . . गुरुद्वन्द्वं लघुप्लुतम् ।
* * * *

रूपकतालम्—
व्यञ्जनं लघुसंयुक्तं रूपके परिकीर्तितः ॥

---

No. **13004.** नृत्ततालल‌क्षणम्, आन्ध्रटीकासहितम्.

NṚTTATĀLALAKṢAṆAM WITH TELUGU MEANING.

Pages, 48. Lines, 21 on a page.

Begins on fol. 45*a* of the MS. described under No. 1891.

Incomplete.

Contains a portion of the Gītagōvindavyākhyā referred to under the last number in the middle.

Same work as the above, being a copy restored from the same.

No. 13005. नृत्तताललक्षणम्—आन्ध्रटीकासहितम्.

NṚTTATĀLALAKṢAṆAM WITH TELUGU MEANING.

Pages, 7. Lines, 22 on a page.

Begins on fol. 36*b* of the MS described under No. 12987.

Incomplete.

Similar to the above.

---

No. 13006. भरतार्णवः, आन्ध्रटीकासहितः.

BHARATĀRṆAVAḤ WITH TELUGU MEANING.

Pages, 46. Lines, 15 on a page.

Begins on fol. 257*a* of the MS. described under No. 1782.

Breaks off in the third Adhyāya.

This work treats of the various kinds of Hastas and Tālas used in gesticulation and dancing. It is stated to be a condensed version of the Bharatārṇava of Nandikēśvara, made by Sumati. The Sanskrit text is accompanied by Telugu meaning.

**Beginning:**

पताकस्त्रिपताकोऽर्धपताकः कर्तरीमुखः ।
मयूरा(ख्यो ऽ)र्धचन्द्रश्च अरालः शकतुण्डकः ॥
मुष्टिश्च शिखरश्चैव कपित्थकटकामुखः ।
सूचीमुखं पद्मकोशो बाणसर्पशिरस्तथा ॥
मृगशीर्षे सिंहमुखो लाङ्गुल अलपल्लवः ।
चतुरो भ्रमरश्चैव हंसास्यो हंसपक्षकः ॥
सन्दंशो मुकुलः चैव ताम्रचूडस्ततः परः ।
इत्यसंयुतहस्तानां नामलक्षणमीरितः ॥

* * * *

**Colophon:**

इति नन्दिकेश्वरविरचित भरतार्णवसुमतिबोधक्षे(ने) असंयुतहस्तप्रकरणं नाम प्रथमोऽध्यायः ॥

* * * *

समूहे दम्पतीभावे चक्रवाकस्य भावनं ।
सङ्कर्षे युज्यते साक्षा(त्) वैष्णवाभिधहस्तकः ॥

**Colophon:**

इति श्रीनन्दिकेश्वरविरचिते भरतार्णवे [व]सुमतिबोधने संयुतप्रकरणं नाम द्वितीयोऽध्यायः ॥

अधिदेवतालक्षणम्—

भुजोपरि स्थिता वाणी भुजमध्यास्थिता रमा ।
मणिबन्धे महागौरी ब्राह्मी चैव करादिभिः(षु) ॥

* * * *

See under the next number for the end.

---

No. **13007**. भरतार्णवः, आन्ध्रटीकासहितः.

BHARATĀRṆAVAḤ WITH TELUGU COMMENTARY

Pages, 34. Lines, 17 on a page.

Begins on fol. 13*a* of the MS. described under No. 12986.

Contains the Adhyāyas 6 complete and 7 incomplete.

Same work as the above.

See under the previous number for the beginning.

**End**.

वृद्धस्त्रियोऽभिनयः—

विसृज्य मुकुलं पूर्वं पश्चाच्च मृगशीर्षकम् ।
वृद्धस्त्रीणां भावनाय कृपाशान्तरसोदये ॥
हस्ता बहुविधास्सन्ति सङ्करा भरतार्णवे ।
सुमतिस्तत्र सङ्क्षिप्य कृता नानार्थबोधकम् ॥

**Colophon**:

इति श्रीनन्दिकेश्वरविरचिते भरतार्णवे सुमतिबोधे प्रकीर्णहस्तकथनं नाम षष्ठोऽध्यायः ॥

अथ गर्भिण्यभिनयः—

सर्पशीर्षकराग्रा तु संयुक्ता नाभिदेशकः(तः) ।
अधःप्रदेशे दृश्ये वा गर्भिणीं संप्रदर्शयेत् ॥

* * * *

प्रयोगे कर्तरी ख्यातः सन्दंशः स्यादधोमुखः ॥
प्रयोगे कर्मणि स्यातां करौ हंसोऽप्यधोमुखः ।
प्रयोगे चालिनी स्यातां सर्पशीर्षोऽप्यधोमुखः ॥

---

No. **13008**. भरतार्णवः, आन्ध्रटीकासहितः.

BHARATĀRṆAVAḤ WITH TELUGU MEANING.

Pages, 50. Lines, 22 on a page.

Begins on foll. 8*a* and 28*a* of the MS. described under No. 12987.

Contains the Adhyāyas 6 incomplete, 2 and 1 complete and 4 incomplete.

Same work as the above.

No. **13009.** भरतार्थचन्द्रिका, आन्ध्रटीकासहितः.

BHARATĀRTHACANDRIKĀ WITH TELUGU MEANING.

Pages, 9. Lines, 17 on a page.

Begins on fol. 23*b* of the MS. described under No. 129?7.

Contains the Nānārthaprakaraṇa only.

Another work on the art of dancing accompanied by the different kinds of movements of the hands, etc. The work is attributed to Nandikēśvara and Pārvatī.

**Beginning:**

नन्दिभरतोक्तसङ्करहस्ताध्यायः—

वक्ष्ये सङ्करहस्तानां हस्तयोगानुसारणम् ।
लाङ्गूलोऽधोमुखो यत्र गोस्तने द्राक्षके भवेत् ॥
ऊर्ध्वाननो यदिसतं ख्यातः शान्ताभिधे रसे ।
पद्मकोशोऽप्यूर्ध्वभागगामी चेद्रसभावने ॥
पश्चात् प्रसारितस्सूची यच्छब्दे पुरतो यदि ।
*　　　*　　　*　　　*
हस्ता बहुविधास्सन्ति सङ्करा भरतार्णवे ।
सुमते तत्र संक्षिप्य भवदर्थे मया कृते ॥
वक्ष्ये नानार्थहस्तानां निर्णयक्रमभावनाम् ।

**End:**

अर्धेति युज्यते ह्यग्रे पताकश्चेत् प्रचालितः ।
अन्येषामपि धातूनामौचित्येन नियुज्यते ॥
भरतार्थचन्द्रिकायां भूधरराजन्यदुहितृरचितायाम् ।
नानार्थमुद्रहस्तः सुमते बहुविधोऽस्ति तत्र सङ्क्षिप्तम् ॥

**Colophon:**

इति श्रीनन्दिकेश्वरविरचितपार्वतीयप्रयुक्तभरतचन्द्रिकानानार्थप्रकरणं समाप्तमासीत् ॥

---

No. **13010.** भावप्रकाशनम्.

BHĀVAPRAKĀŚANAM.

Substance, paper. Size, 13 × $8\frac{5}{8}$ inches. Pages, 203. Lines, 25 on a page. Character, Telugu. Condition, good. Appearance, new.

Complete.

Contains the following Adhikāras:—

| | |
|---|---|
| १. भावनिर्णयः. | ६. शब्दार्थसम्बन्धभेदप्रकार-निर्णयः. |
| २. Do. | ७. नाट्येतिवृत्तादिलक्षणम्. |
| ३. अवान्तरभावभेदस्वरूपनिर्णयः. | ८. दशरूपकलक्षणम्. |
| ४. शृङ्गारालम्बननायकादिस्वरूप-निर्णयः. | ९. नृत्यभेदस्वरूपलक्षणम्. |
| ५. नायिकानायकभेदावस्थारसभा-वदृष्टिविकारनिर्णयः. | १०. नाट्यप्रयोगभेदप्रकारनिर्णयः. |

A treatise in dancing, gesticulation and dramatic representation. The various subjects dealt with in the work are apparent from the names of the Adhikāras given below.

The author is Śāradātanaya, whose genealogy is given below:—

Lakṣmaṇa
(of Kāśyapagōtra)
|
Kṛṣṇa
|
Bhaṭṭagōpāla
|
Śāradātanaya

(so named because he was considered to have been born by the grace of Śāradādēvī, worshipped at Benares)

Lakṣmaṇa is said to have been a resident of Māṭarapūjya village in the Mēruttara country of the Āryāvarta and to have written a commentary on the Vēdas, called Vēdabhūṣaṇam. The author learnt the Nāṭyaśāstra from one Divākara.

**Beginning:**

प्रश्च्योतन्मदमन्धरभ्रमरिकाझंकारगीतं मुहुः
हेलाबृंहितवादनव्यतिकरं भावोल्लसत्प्रक्रियन् ।
नृत्यन्नस्तु सुखाय वः करिमुखः पुण्यापहाराश्चिरा-
दानन्दी नटभावितैरिव यथा भावैस्स सामाजिकः ॥
वन्दे बृन्दावनचरं गोविन्दं गोपिकापतिम् ।
गाः पालयन्तं गायन्तं वेणुना षड्जवादिना ॥
अम्बिकारसिकापाङ्गमाविःस्मितमुखाम्बुजम् ।
भजे भुजङ्गललितमहं वैयाघ्रचर्मिणम् ॥
नमामि मानसोल्लासभावनाफलदायिनीम् ।
शारदां शारदाम्भोजविशदामभयप्रदाम् ॥

आर्यावर्ताह्वये देशे स्थितो जनपदो महान् ।
मेरूत्तर इति ख्यातस्तस्य दक्षिणभागतः ॥
ग्रामो माठरपूज्याख्यो द्विजसाहस्रसम्मितः ।
तत्र लक्ष्मणनामासीत् विप्रः काश्यपवंशजः ॥
त्रिंशता क्रतुभिर्विष्णुं तोषयामास वेदवित् ।
वेदानां भाष्यमकरोत् नाम्ना यो वेदभूषणम् ॥
तस्य श्रीकृष्णनामासीत् पुत्रः कृष्ण इवापरः ।
वेदानधीत्य सकलान् शास्त्राण्यप्यखिलानि च ॥
पुत्रार्थं स महादेवं वाराणस्यामतोषयत् ।
तस्यासीत् भट्टगोपालो नाम्ना सूनुस्सुलोचनः ॥
अष्टादशसु विद्यासु बहुशस्स कृतश्रमः ।
उपास्य शारदां देवीं पुत्रं लेभे गुणोत्तरम् ॥
तमाह्वयत्पिता प्रीतः शारदातनयाख्यया ।
अधीतवेदवेदाङ्गो वर्धमानः पितुर्गृहे ॥
कदाचिच्छारदां देवीमुपासितुमुपाययौ ॥
उपास्य स वसन् तस्याः चैत्रयात्रामहोत्सवे ॥
आसीनां नर्तनागारे तां देवीं प्रेक्षकैस्सह ।
प्रणम्य तैरनुज्ञातः तस्याः पार्श्वमुपाविशत् ॥
त्रिंशत्प्रकारभिन्नानि रूपकाणि पृथक् पृथक् ।
नटैः प्रयुज्यमानानि भावाभिनयकोविदैः ॥
दृष्ट्वा स देवीं वरदां नाट्यवेदमयाचत ।
नाट्यशालापतिः कश्चित् दिवाकर इति द्विजः ॥
तयैव नाट्यवेदस्य नियुक्तोऽध्यापने तदा ।
प्रीतस्सोऽपि सदाशिवस्त्वशिवयोर्गौर्या मतं वासुके-
र्वाग्देव्या अपि नारदस्य च मुनेः कुम्भोद्भवव्यासयोः ।
शिष्याणां भरतस्य यानि च मतान्यध्याप्य तान्यञ्जसा
सूनोरप्यथ नाट्यवेदमखिलं सम्यक्तथाध्यापयत्
शारदातनयो देव्यास्तान्यधीत्य च सन्निधौ ।
आदाय सारमेतेभ्यो हितार्थं नाट्यवेदिनाम् ॥

भावप्रकाशनं नाम प्रबन्धमकरोत्तदा ।
एतस्मिन् प्रथमं भावस्तस्य भेदास्ततः परम् ॥
तदवान्तरभेदाश्च तत्तत्कार्येषु कौशलम् ।
तत्साध्योऽर्थस्ततस्तेषामुपकार्योपकारिता ॥
रसोपादानता तेषां चरस्थिरविभागतः ।
तद्दर्शनानि तद्दृष्टिः तस्य धर्माः पृथग्विधाः ॥
परस्परस्य सामर्थ्यं साहचर्यात्कचित्कचित् ।
इति भावगता भावा द्वादशैते ततो रसः ॥
* * * *

**Colophon:**

इति शारदातनयविरचिते भावप्रकाशने भावनिर्णयो नाम प्रथमोऽधिकारः ॥

**End:**

तेषां मतैरभिन्नोऽपि भिन्नवत्प्रविभासितः ।
न स्वास्थ्यात् नापि मौढ्याच्च कोप्यऽर्थो निहितः कचित् ॥
भट्टाभिनवगुप्तार्यपादप्रोक्तेन वर्त्मना ।
अयं प्रबन्धः कथितः शारदायाः प्रसादतः ॥
यः कश्चिदवगन्ता चेत् प्रबन्धस्यास्य तत्त्वतः ।
स माननीयो भवति राजभिर्भावकोविदैः ॥

**Colophon:**

इति शारदातनयविरचिते भावप्रकाशने नाट्यप्रयोगभेदप्रकारविशेषनिर्णयो नाम दशमोऽधिकारः ॥

भावप्रकाशनं समाप्तम् ॥

---

No. **13011.** मृदङ्गलक्षणम्, आन्ध्रटीकासहितम्.

MṚDAṄGALAKṢAṆAM WITH TELUGU MEANING.

Pages, 6. Lines, 24 on a page.

Begins on fol. 285*a* of the MS. described under No. 12984.

Incomplete.

A treatise giving details in connexion with the making of musical drums. At first God Viṣṇu is said to have made use of the skin of the demon Vṛtra who was killed by Him in the making of the musical drum; and this forms the legendary origin of that musical instrument.

**Beginning :**

पुरा मुरासुरो नाम देवानामन्तको बली ।
वृत्रासुरस्तु बलवानितावु(भायु)तबलौ तथा ॥
सत्रयागप्रवृत्ते तं गङ्गातीरे मनोहरे ।
हिमवत्प्रान्तकान्तारे मुनिभिः कलिते पले ॥
पुरोडाशनिमित्तेषु देवैस्साकं नियोध्यतः ।
तत्काले तु महाविष्णुस्सर्वलोकैकरक्षकः ॥
मुरासुरं प्रगृह्याशु हूत्वसादौ(हत्वा पादौ)कका लिरः (तथा शिरः) ।
चर्मणा तच्छिरस्थेन वामपार्श्वद्वयं विदः (मिथः) ॥
तत्पादचर्मणाबध्य चतुर्विंशतिसङ्ख्यया ।
तत्कुक्षिस्थेन पिण्डेन

* * * *

मुरस्य देहं हे नन्दिन् द्विमुखे कण्ठविष्टरे ।
मुखध्वनिर्महानासीत् पृष्ठे धिमिधिमा इति ॥
एवं कृतं मया चाद्य तकादत्तं महारवम् ।

* * * *

तन्यतां भरतोक्तेन शास्त्रमार्गेण सद्ध्वनि ।
महाप्रलयकालस्य ताण्डवस्य च सन्निधौ ।
मृदङ्गं वादयामास महानन्दी लयानुगम् ॥

**End :**

चतुर्थच्युतधारालं लचतुष्कं प्रकीर्तितः ।
उद्घटो मर्दले चैव

* * * *

नगणो मगणो वापि भवेद्वाद्यां विनोदने ।

---

No. **13012.** मृदङ्गलक्षणम्, आन्ध्रटीकासहितम्.

MṚDAṄGALAKṢAṆAM WITH TELUGU MEANING.

Pages, 10. Lines, 5 on a page.

Begins on fol. 70*a* of the MS. described under No. 12985.

Incomplete.

Same work as the above.

## No. 13013. रागवर्णनिरूपणम्.
## RĀGAVARṆANIRŪPAṆAM.

Substance, palm-leaf. Size, 16⅜ × 1½ inches. Pages, 30. Lines, 5 on a page. Character, Telugu. Condition, injured. Appearance, old.

Incomplete

A treatise explaining the different musical modes or Rāgas.

**Beginning:**

सौराष्ट्र—

सा । रीरीरीरीरीसा । स । निसरि । निसरि । निसरि । सनिधनिधा धनि-
सरि रीरीरीरीस्सनिसाधपमा । पधनिधपमपा । गमपाधनिधपमा । पमधपमगरि ।
गमपधनि सरिसनिरिरिससा । गरीस । निरिरिस । सनिधनिधा । धनिसरिगा
रिरिस । निरिरिससनिधनिधा । धनिसगरिस । निरिरिससा रिरिसरिगमगरिगरी-
गमामगागरी.

**End:**

कल्याणि—ध्रुवम्.

అదిగో నారూపమరి । అలఙినె అందు జేరి । మదిరాక్షి పొందు జేరి ।
మదనగో పాలశౌరి । శ్రీ పాల్లం ॥

తాంధణతద్ధిమితక । తఝుంతకఝుంతదిత్తక । తరితఝుణు । తధి
మిధణాం । తదణంతఝాం । తకిటధమితోం । ఝుణుఝుణుతా । ధణధణతా ।
ధిమితాహంతఝుంతక । ధరికిటతక । తకఝుణు । తకధిమి ॥

సస్సగ్రిరిరి । సగ్గారిగమాపగగరీ । గగరిపమా । గగరిగరీ సరినీ
సరీసగరిగమపా । గమగమపా । మపమపధా । పధనీ । ధనిసానిధ ।
సనినిధధప । ధనిసరి । గరిగరి । తటకిణ । ధికితతకిట । తాంగ్గుతక ।
దధిగిణతోం । అదిగో ॥

నిసధప । ధనిధధపమ । గమపధమపగారిస ॥

---

## No. 13014. रागसागरम्.
## RĀGASĀGARAM.

Substance, paper. Size, 7⅜ × 6 inches. Pages, 45. Lines, 18 on a page. Character, Telugu. Condition, fair. Appearance, old.

Contains the following Taraṅgas :—

१. रागविमर्शः । २. श्रुतिस्वररागविमर्शः । ३. रागध्यानविधानम् ।

A work treating of the different kinds of Rāgas, their forms and attributes. The Ṛṣi, the Chandas, the Dēvatā and the meditation stanzas are also given.

**Beginning:**

दत्तिल उवाच—

ब्रह्मपुत्र महारागभेदज्ञ वरनारद ।
सङ्गीतविद्यासारं तु ब्रूहि मे मुनिसत्तम ॥

नारद उवाच—

भो दत्तिल महारागभेदान् वक्ष्यामि तच्छृणु ।
भैरवश्चापि भूपालः श्रीरागः पटमञ्जरी ॥
वसन्तो मालवश्चापि बङ्गालो नाटकस्तथा ।
एतेऽष्ट रागास्सर्वत्र पुंरागा इति कीर्तिताः ॥

जातिभेदाः—

विप्रा भैरवभूपालौ कीर्तितौ सामवेदिनौ ।
श्रीरागो मञ्जरी चैव यजुर्वेदी च पार्थिव ॥
वसन्तो मालवश्चापि ऋग्वेदी वैश्यकस्स्मृतः ।
आ(अथा)थर्वणिकः शूद्रो बङ्गालो नाटकस्तथा ॥

* * * *

**Colophon:**

इति श्रीरागसागरे नारददत्तिलसंवादे रागविमर्शको नाम प्रथमस्तरङ्गः ।

**End:**

एतानि सर्वरागाणां ध्यानानि मुनिभिः पुरा ॥
कथ्यन्ते सर्वशास्त्रेषु निश्चितानीति सर्वदा ।
एतत् सङ्गीतशास्त्रन्तु सर्वकामफलप्रदम् ॥
अनन्तहरिरूपाख्यां वर्णाख्यां रागभासिताम् ।
तदाखा(ख्या)यनमात्रेण भुक्तिमुक्तिफलं लभेत् ॥
पुत्रपौत्रकरं नृणां राज्ञां राज्यप्रदायकम् ।
एतच्छास्त्रं सदा विष्णुहरयोः प्रीतिदं भवेत् ॥

**Colophon:**

इति श्रीरागसागरे नारददत्तिलसंवादे रागध्यानविधानं नाम तृतीयस्तरङ्गः ॥

## No. 13015. रागसागरम्.
## RĀGASĀGARAM.

Substance, paper. Size, 10¾ × 8 inches. Pages, 24. Lines, 18 on a page. Character, Telugu. Condition, good. Appearance, old.

Begins on fol. 1*a*. The other work herein is Svaramēlakalānidhi 13*a*.

Contains three Taraṅgas.

Same work as the above.

---

## No. 13016. सङ्गीतदर्पणम्.
## SAṄGĪTADARPAṆAM.

Substance, palm-leaf. Size, 13⅝ × 1¼ inches. Pages, 80. Lines, 9 on a page. Character, Nandināgarī. Condition, injured. Appearance, old.

Contains the following Adhyāyas :—

| | |
|---|---|
| १. स्वरगताध्यायः. | ४. प्रबन्धाध्यायः. |
| २. रागविवेकाध्यायः. | ५. वाद्याध्यायः. |
| ३. प्रकीर्णकाध्यायः. | ६. नृत्ताध्यायः. |

A treatise on details connected with singing (including musical notes, tunes, modes, etc.), instrumental music and dancing which three are said to form the elements of Saṅgīta : by Catura-Dāmōdara, son of Lakṣmīdharabhaṭṭa.

**Beginning :**

प्रणम्य शिरसा देवौ पितामहमहेश्वरौ ।
सङ्गीत . . . . . रतोयं मयोच्यते ॥
भरतादिमतं सर्वमालोच्यातिप्रयत्नतः ।
श्रीमद्दामोदराख्येन सज्जनानन्दहेतुना ॥
प्रचरद्रूपसङ्गीतसारोद्धारो विधीयते ।
गीतं वाद्यं नर्तनं च त्रयं सङ्गीतमुच्यते ॥
मार्गदेशीविभागेन सङ्गीतं द्विविधं मतम् ।
यत्पुरा ब्रह्मणोद्दिष्टं प्रयुक्तं भरतादिभिः ॥
महादेवस्य पुरतस्तन्मार्गाख्यं विदुर्बुधाः ।
तत्तद्देशस्थया रीत्या यत्स्याल्लोकानुरञ्जनम् ॥

देशे देशे तु सङ्गीतं यत्तद्देशीति गीयते ।
गीतवादित्रनृत्तानां रक्तिः साधारणो गुणः ॥
अतो रक्तिविहीनं यत्तन्न सङ्गीतमुच्यते ।

* * * *

**Colophon:**

इति लक्ष्मीधरसुतदामोदरविरचिते सङ्गीतदर्पणे स्वराध्यायः प्रथमः ॥

**End:**

अथ गोण्डली—

वाद्यप्रबन्धैः कठिनैः त्यक्तमे(ला)दिभिस्तथा ।
गीतैः साधग . . चैः प्रबन्धैश्च ध्रुवादिभिः ॥
लास्याङ्गैरन्वितं यत्र नृत्तं यत् द्रुतमानतः ।
स्वयं गायति वाद्यं च त्रिवलीं वादयेत् स्वयम् ॥
त्रिवलीधारणं स्कन्धे ग्राम्यत्वं कुरुते स्त्रियः ।
अगायन्ती त्वशारीरा सैव स्यान्मुक्तकुण्डली ॥
गोण्डल्यां मण्डनं प्रोक्तं तज्ज्ञैः कर्णाटदेशजम् ।

इति गोण्डी ॥

कुण्डल्यां सुस्वरं गायेन्न गायेन्मुक्तगोण्डली ॥

**Colophon:**

इति श्रीमल्लक्ष्मीधरभट्टसुतचतुरदामोदरविरचिते सङ्गीतदर्पणे नृत्ताध्यायः षष्ठः ॥

समाप्तिं गतश्चायं दर्पणाख्यो ग्रन्थः ॥

---

No. **13017**. सङ्गीतदर्पणम्, आन्ध्रटीकासहितम्.

SANGĪTADARPAṆAM WITH TELUGU COMMENTARY.

***Pages*, 66. Lines, 22 on a page.**

Begins on fol. 1*a* of the MS. described under No. 12753.

Contains the Adhyāyas 1 to 3 only.

Same work as the above. The authorship is attributed to Haribhaṭṭa in the introductory stanzas which are given below.

**Beginning:**

प्रणम्य शिरसा देवौ पितामहमहेश्वरौ ।
सङ्गीतशास्त्रं वक्ष्यामि सारमुद्धृत्य वारिधेः ॥

भरतादिमतं सर्वमालोड्यातिप्रयत्नतः ।
श्रीमता हरिभट्टेन सज्जनानन्दहेतुना ॥
सत्कर्णभूषसङ्गीतसारोद्धारो विधीयते ।
गीतं वाद्यं तथा नृत्यं लयं सङ्गीतमुच्यते ॥

See under the previous number for the end.

---

## No. 13018. सङ्गीतरत्नाकरः.

## SAṄGĪTARATNĀKARAḤ.

Substance, palm-leaf. Size, $10\frac{3}{8} \times 1\frac{1}{2}$ inches. Pages, 599. Lines, 6 on a page. Character, Telugu. Condition, fair. Appearance, old.

Breaks off in the seventh Adhyāya.

A comprehensive treatise in seven Adhyāyas on the science of music by Śārṅgadēva, son of Soḍḍhala and grandson of Bhāskara of Svastigṛhī family in Kashmir. The work has been printed in the Ānandāśrama Series. The author himself states that he has composed a work named Adhyātmavivēka. The author's father Soḍḍhala is said to have attained great fame by worshipping Bhillam(n)a and established the sovereignty of Siṁhaṇadēva.

१. स्वराध्यायः.
२. रागविवेकाध्यायः.
३. प्रकीर्णकाध्यायः.
४. प्रबन्धाध्यायः.
५. तालाध्यायः.
६. वाद्याध्यायः.
७. नर्तनाध्यायः.

**Beginning :**

साभावक्षालवर्यानुतविभवितनुर्यावलक्षःवभासा
जानानस्याशयप्रानवनलिनवनप्रायशस्याननाजा ।
सातंवमाननस्थारहसिरसिहरस्थाननमावतंसा
पायादत्तारणत्रामतनमनतमत्राणरत्तादयापा ॥
ब्रह्मग्रन्थिजमारुतानुगतिना चित्तेन हृत्पङ्कजे
सूरीणामनुरञ्जकं श्रुतिपदं योऽयं स्वयं राजते ।
यस्माद्ग्रामविभागवर्णरचनालंकारजातिक्रमो
वन्दे नादतनुं तमुद्धुरजगद्गीतं मुदे शंकरम् ॥
अस्ति स्वास्तिगृहीवंशः श्रीमत्काश्मीरसंभवः ।
ऋषेर्वृषगणाज्जातः कीर्तिक्षालितदिङ्मुखः ॥

यज्वभिर्धर्मधीधुर्यैर्वेदसागरपारगैः ।
यो द्विजेन्द्रैरलंचक्रे ब्रह्मभिर्भूगतैरिव ॥
तत्राभूद्भास्करप्रख्यो भास्करस्तेजसां निधिः ।
अलंकर्तुं दक्षिणाशां यश्चक्रे दक्षिणायनम् ॥
तस्याभूत्तनयः प्रभूतविनयः श्रीसोड्म(ढ)लः प्रौढधी-
र्येन श्रीकरणप्रबुद्धविभवं भूवल्लभं भिल्लमम् ।
आराध्याखिललोकशोकशमनी कीर्तिः समासादिता
जैत्रे जैत्रपदं न्यधायि महती श्रीसिंहणे श्रीरपि ॥
एकः क्ष्मावलये क्षितीश्वरमिलन्मौलीन्द्रनीलावलि-
प्रोदञ्चद्द्युतिचुम्बिताङ्घ्रिनखरज्योतिर्नृपालाग्रणीः ।
श्री(मत्)सिंहणदेव एव विजयी यस्य प्रतापानलो
विश्व॰व्याप्यपि दंदहीति हृदयान्येव द्विषामुद्धुरः ॥
तं प्रसाद्य सुधीधुर्यो गुणिनं गुणरागिणम् ।
गुणग्रामेण यो विश्वमुपकारैरतीतृपत् ॥
ददौ न किं न किं जज्ञौ न दधौ कां च संपदम् ।
कं धर्मं विदधौ नैष न बभौ कैर्गुणैरयम् ॥
तस्माद्दुग्धाम्बुधेर्जातः शार्ङ्गदेवः सुधाकरः ।
उपर्युपरि सर्वान्यः सदौदार्यस्फुरत्करः ॥
कृतगुरुपदसेवः प्रीणिताशेषदेवः
कलितसकलशास्त्रप्रीणिताशेषपात्रः ।
जगति विततकीर्तिर्मन्मथोदारमूर्तिः
प्रचुरतरविवेकः शार्ङ्गदेवोऽयमेकः ॥
नानास्थानेषु संभ्रान्ता परिश्रान्ता सरस्वती ।
सहवासप्रिया शश्वद्विश्राम्यति यदालये ॥
स विनोदैकरसिको भाग्यवैदग्ध्यभाजनम् ।
धनदानेन विप्राणामार्तीः संहृत्य शाश्वतीः ॥
जिज्ञासूनां च विद्याभिर्गदार्तानां रसायनैः ।
अधुनाखिललोकानां तापत्रयजिहीर्षया ॥

शाश्वताय च धर्माय कीर्तिनिःश्रेयसाप्तच(ये) ।
आविष्करोति संगीतरत्नाकरमुदारधीः ॥
सदाशिवः शिव(ा)ब्रह्मा भरतः काश्यपो मुनिः ।
मतङ्गो याष्टिको दुर्गा शक्तिः शार्दूलकोहलौ ॥
विशाखिलो दत्तिलश्च कम्बलोऽश्वतरस्तथा ।
वायुर्विश्वावसू रम्भार्जुनो नारदतुम्बुरू ॥
आञ्जनेयो मातृगुप्तो रावणो नन्दिकेश्वरः ।
स्वातिर्गुणो देवराजः क्षत्रराजश्च राहुलः ॥
उद्भ(रुद्र)टोऽनग्निभूपालो भोजभूवल्लभस्तथा ।
परमर्दी च सोमेशो जगदेकमहीपतिः ॥
व्याख्यातारो[त्] भारतीच(ये) लोलटोद्भटशङ्कुकाः ।
भट्टोऽभिनवगुप्तश्च श्रीमत्कीर्तिधरोऽपरः ॥
अन्ये च बहवः पूर्वे ये संगीतविशारदाः ।
अगाधं बोधमन्थेन तेषां मतपयोनिधिम् ॥
निर्मथ्य श्रीशार्ङ्गदेवः सारोद्धारमिमं व्यधात् ।
गीतं वाद्यं तथा नृत्यं त्रयं संगीतमुच्यते ॥
मार्गो देशीति तद्द्वेधा तत्र मार्गः स उच्यते ।
यो मार्गितो विरिञ्चाद्यैः प्रयुक्तो भरतादिभिः ॥

* * * *

**Colophon:**

इति श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिश्रीसोड्ढलदेवनन्दननिःशङ्कश्रीशार्ङ्गदेवविरचिते संगीतरत्नाकरे स्वरगताध्यायः प्रथमः ॥

See under the next number for the end.

---

No. **13019.** सङ्गीतरत्नाकरः.

SAṄGĪTARATNĀKARAḤ.

Substance, paper. Size, 8 × 6¼ inches. Pages, 334. Lines, 24 on a page. Character, Telugu. Condition, good. Appearance, new.

Complete.

Same work as the above.

See under the previous number for the beginning.

**End:**

सूरिश्रीशार्ङ्गदेवेन नाट्यवेदाम्बुधेरिदम् ।
समस्तमुद्धृतं सारं धीरैरातृप्ति सेव्यताम् ॥
ग्रन्थे मदीये यदि कश्चिदस्ति गुणस्ततस्तस्य परिग्रहाय ।
नाभ्यर्थये वः सुधियः परेषां गुणोऽणुरप्यद्रिसमो भवत्तु ॥
सावद्यता वा निरवद्यता वा ग्रन्थे मयात्र ग्रथिते तया किम् ।
आराधने च(वः) प्रवणा मतिर्मे सन्तो गुणः कं ननु नातिशेते ॥
यस्य क्षोदक्षमं वस्तु किमत्रास्ति जगत्रये ।
किंतु मत्प्रेमतः सन्तः पुरस्कुरुत मे कृतिम् ॥
यद्वा पुराणं पन्थानं मुनीनामहमन्वगाम् ।
स्निह्यन्ति च निसर्गेण सन्तः सन्मार्गगामिनः ॥
आरिराधयिषोः साधून् किं प्रज्ञाविभवेन मे ।
राममानन्दयन्ति स्म तिर्यञ्चोऽपि कपीश्वराः ॥
न विद्यादर्पतो ग्रन्थप्रवृत्तिर्मम किं त्विदम् ।
विद्वन्मानसवासाय गन्तुं पाथेयमस्त्विदम् ॥
बुभुत्सा यत्र तत्र स्यात्तत्र पादः प्रवर्तते ।
दूषणोद्भावनाहीनो मतोऽसौ गुरुशिष्ययोः ॥
विजिगीषोर्भवेदन्यः साधनैर्दूषणैरतः ।
पराजितः स च ज्ञातायत्र निस्खलितश्च यः ॥
सा वितण्डा भवेज्जल्पः संविदं विदुरन्वितम् ।
दूषयत्येव यः कश्चित् प्रतिवादी न साधकः ॥

**Colophon:**

इति श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिसोड्ढलनायकनन्दनानिःशङ्क-शार्ङ्गदेवविरचिते संगीतरत्नाकरे नर्तनाध्यायः सप्तमः समाप्तः ॥

संगीतरत्नाकरः समाप्तः ॥

---

No. **13020**. सङ्गीतरत्नाकरः.

SAṄGĪTARATNĀKARAḤ.

Substance, palm-leaf. Size, 17 × 1⅝ inches. Pages, 384. Lines, 7 on a page. Character, Telugu. Condition, fair. Appearance, old. Complete.

Same work as the above.

## No. 13021. सङ्गीतरत्नाकरः.

## SAṄGĪTARATNĀKARAḤ.

Substance, paper. Size, $10\frac{5}{8} \times 8\frac{3}{8}$ inches. Pages, 444. Lines, 17 on a page Character, Telugu. Condition, good. Appearance, old.

Wants the beginning in the first Adhyāya and breaks off in the seventh Adhyāya.

Same work as the above.

---

## No. 13022. सङ्गीतरत्नाकरः.

## SAṄGĪTARATNĀKARAḤ.

Substance, palm-leaf. Size, $13\frac{3}{8} \times 1$ inches. Pages, 26. Lines, 5 on a page. Character, Grantha. Condition, injured. Appearance, old.

Contains a portion of the Tālādhyāya (the fifth).

Same work as the above.

---

## No. 13023. सङ्गीतरत्नाकरः.

## SAṄGĪTARATNĀKARAḤ.

Substance, paper. Size, $11\frac{3}{4} \times 7\frac{3}{4}$ inches. Pages, 517. Lines, 22 on a page. Character, Telugu. Condition, good. Appearance, new.

Wants the first 20 stanzas in the first Adhyāya and breaks off in the seventh Adhyāya.

Same work as the above.

---

## No. 13024. सङ्गीतरत्नाकरः.

## SAṄGĪTARATNĀKARAḤ.

Substance, palm-leaf. Size, $7\frac{4}{8} \times \frac{7}{8}$ inches. Pages, 73. Lines, 4 on a page. Character, Telugu. Condition, good. Appearance, new.

Contains a few stanzas in the first Adhyāya with Telugu notes.

Same work as the above.

---

## No. 13025. सङ्गीतरत्नाकरः.

## SAṄGĪTARATNĀKARAḤ.

Substance, paper. Size, $12 \times 8$ inches. Pages, 110. Lines, 30 on a page. Character, Telugu. Condition, much injured. Appearance, old.

Breaks off in the fifth Adhyāya.

Same work as the above.

## No. 13026. सङ्गीतरत्नाकरः, (आन्ध्र)टीकासहितः.
## SAṄGĪTARATNĀKARAḤ WITH (TELUGU) ṬĪKĀ.

Substance, paper. Size, $8\frac{5}{8} \times 6\frac{5}{8}$ inches. Pages, 1,071. Lines, 19 on a page. Character, Telugu. Condition, good. Appearance, new.

Complete

Gives the meaning in Telugu of the Sanskrit stanzas of the Saṅgītaratnākara. The MS. does not give the stanzas contained in the Saṅgītaratnākara, but gives on one side the prose-order of the stanzas with the Telugu meaning of each of them in the opposite side.

---

## No. 13027. सङ्गीतविषयः.
## SAṄGĪTAVIṢAYAḤ.

Substance, paper. Size, $8 \times 6\frac{1}{4}$ inches. Pages, 32. Lines, 19 on a page. Character, Telugu. Condition, fair. Appearance, old.

Contains certain details relating to Saṅgīta. The names of the 72 different kinds of Rāgas are enumerated in the beginning.

**Beginning :**

तत्रादौ द्विसप्ततिभेदरागनामान्युच्यन्ते—

कनकाङ्गी च रत्नाङ्गी गानमूर्तिवनस्पति ।
मौनवती तानरूपी सेनावति तथैव च ॥
हनुमत्तोडिरागश्च जनगेयमनोहरम् ।
धेनुकारागमाख्याता नाटकप्रियनामकम् ।
कोकिलप्रियविख्यातरूपादतिशुभप्रदम् ॥

* * * *

नासिकाभूषणे मेला कोसलाख्या जयप्रदा ।
रसिकप्रियमेलश्च इति रागाधिकारकाः ॥

**End :**

षड्जग्रहांशकन्यासमिति मूर्च्छनलक्षणम् ।
सरिगामधनीनीसापनिधामागसानिसा ॥
शुभङ्करं सदा धीरशङ्कराभरणं तथा
तन्मेलजं कुरञ्जी च षड्जं न्यासांशसङ्ग्रहम् ॥

---

## No. 13028. सङ्गीतसमयसारः.
## SAṄGĪTASAMAYASĀRAḤ.

Substance, palm-leaf. Size, $13\frac{1}{8} \times 1$ inches. Pages, 96. Lines, 7 on a page. Character, Nandināgarī. Condition, injured. Appearance, old.

Breaks off in the tenth Adhikaraṇa The topics dealt with in the ten Adhikaraṇas are—

१. स्वरनिरुक्तिमूर्छनादिनिरूपणम्.
२. पिण्डनादाद्युत्पत्तिनिरूपणम्.
३. रागरूपकालशक्तिभेदादिनिरूपणम्.
४. रागभेदनिरूपणम्.
५. निबन्धविभागनिरूपणम्
६ आतोद्यनिरूपणम्.
७ नृत्तसारनिरूपणम्.
८. तालस्वरूपाधिकरणनिरूपणम्.
९. वादनिर्णयः.
१० तालसङ्ख्याप्रस्तारादिनिरूपणम्.

A treatise dealing elaborately with the subject of Saṅgīta as detailed above. The following persons are mentioned as authors of works on Saṅgīta and as having been consulted by him :—Sōmēśvara, Tumburu, Bhōja, Mataṅga, Kāśyapa, Dattila, Kōhala, and Hanūmat The author is Pārśvadēva also called Saṅgītākara, son of Gaurī and Ādidēva, and disciple of Mahādēvārya who was himself the disciple of Ubhayacandra. The author is a Jaina and states that, according to Vyāsa, Parāśara, Bhṛgu, Yama and other Smṛti writers, Saṅgīta leads one to obtain salvation, while Mīmāṁsa, Vēdānta, Nyāya and other Darśanas may not help one to obtain it

**Beginning**:

नित्यं यत्पदपङ्कजं कृतधियो नत्वा लघुक्ष्माधिपै-
राराध्या गुरुतामुपेत्य नियतं क्षोणीतले ते धृतम् ।
सा मेऽस्तोककृपातरङ्गतरलप्रोक्तालया शारदा
पुष्णातु श्रुत . पुरायतदृशा कुन्दावदातानिशम् ॥
लोके दत्तिलकोहलानिलसुतास्सोमेश्वरस्तुम्बुरुः
शास्त्रं भोजमतङ्गकश्यपमुखाः व्यातेनिरे ते पुरा ।
एतस्मादुदपादि गाधिरसिको गीतप्रमोदाकरः
सङ्गीताकरसूरिणा परमतादुद्धृत्य सारं स्फुटम् ॥
श्रीकण्ठान्वयदुग्धवार्धि . . . . ना . कला
गौरी यज्जननी लसद्गुणगणा यस्यादिदेवः पिता ।
यश्चेतो जिनपादपद्मयुगलध्यानैकतानं सदा
सङ्गीताकरधीमतो विजयते तस्यैव सेयं कृतिः ॥

चाञ्चल्यं किञ्चिदेतद्भरतमुपगते तावता चञ्चलत्वं
शास्त्राख्याम्भोधिमुद्रामुकुलितनयने यानि तत्राप्नुवन्ति ।
तं . . . . . . . . . . . भर्ग-
श्रीपादाङ्गुष्ठसङ्गस्खलिततजगन्मङ्गलं सञ्चरेषु ॥

भरतं द्विविधम्— मार्गो देशीयमिति । तयोर्लक्षणं तु—

स्वरा ग्रामास्तथा जातिर्वर्धमानादिगीतकम् ।
आवापादिक्रियाबद्धं सप्तमार्ग इति स्मृतः ॥

आवापादिक्रियालक्षणन्त्वनुपदमेव वक्ष्यते ।

स च मार्गो द्विविधः— जातिगानं मन्द्रगानं चेति । तथाचोच्यते—

स्थानश्रुतिस्वरग्राममूर्च्छनास्थानसंयुताः ।
साधारणा जातयश्च रागा मन्द्रादिगीतकम् ॥

* * * *

**Colophon:**

इति श्रीमदभयचन्द्रमुनीन्द्रचरणकमलमधुकरायितमस्तकमहादेवार्यशिष्यस्वरविमलविद्यापुत्रसम्यक्त्वचूडामणिभरतभाण्डीकभाषाप्रवीणश्रुतिज्ञानचक्रवर्तिसङ्गीताकरनामधेयपार्श्वदेवविरचिते सङ्गीतसमयसारे प्रथमाधिकरणम् ।

**End:**

मीमांसाद्वयवेदान्तन्यायवैशेषिकैर्मतैः ।
षड्भिस्तर्कैरगम्योऽपि गम्यो गीतेन शङ्करः ॥
पाराशर्यपराशरौ भृगुयमौ संवर्तकात्यायना-
वापस्तम्बबृहस्पती सलिखिता हारीतदक्षा मनुः ।
विष्णवत्री च सगौतमौ मुनिवरः शङ्खोऽपि दक्षा(त्ता)दयः
सर्वे मोक्षदमित्युशन्ति मुनयो गीतं तदेवोक्तितः ॥

**Colophon:**

इति पार्श्वदेवविरचिते सङ्गीतसमयसारे नवमाधिकरणम् ॥

श्रीपार्श्वजिनमानम्य देशीतालानुलक्षणम् ।
तालस्य लक्षणं वक्ष्ये पूर्वशास्त्रानुसारतः ॥
श्रीसोमेश्वरदत्तिलप्रभृतिभिस्तालस्वरूपं पुरा
प्रोक्तं सर्वजगद्धिताय चतुरस्रादिप्रभेदान्वितम् ।

एतद्वैकदपूर्वभेदसहितं तालस्य षट्प्रत्ययं
सङ्गीताकरसूरिणा निगदितं चित्रायमाणं ब्रुवे ॥
तालशब्दस्य निष्पत्तिः प्रतिष्ठार्थेन धातुना ।
स तालः कालमानं यः क्रियया परिकल्पितः ॥

* * * *

बिन्दुप्रस्तरणात् परं लिखित(त) . . .
युक्तं तद्द्वयमेकदा व्यवहृतं द्वन्द्वं लिखित्वाधुना ।
आसन्नद्रुतमेलनाद्द्रुतलघुव्रातं तदूर्ध्वक्रमा-
देकैकान्तरिताङ्कतः परिमित दीर्घप्लुतं धीमता ॥

---

## No. 13029. स्वरमेलकलानिधिः.

## SVARAMĒLAKALĀNIDHIḤ.

Pages, 25. Lines, 24 on a page.

Begins on fol. 83*a* of the MS. described under No. 1552.

Wants the beginning; otherwise complete in five Prakaraṇas.

Same work as that described under R. No. 366(*d*) of the Triennial Catalogue of MSS., Vol. I, Part I-B. By Rāmāmātya.

---

## No. 13030. स्वरमेलकलानिधिः.

## SVARAMĒLAKALĀNIDHIḤ

Pages, 7. Lines, 19 on a page.

Begins on fol. 13*a* of the MS. described under No. 13015.

Contains the second Prakaraṇa (complete) and the third (incomplete).

Same work as the above.

---

## No. 13031. स्वरमेलकलानिधिः.

## SVARAMĒLAKALĀNIDHIḤ.

Substance, paper. Size, $8\frac{7}{8} \times 5\frac{1}{2}$ inches. Pages, 83. Lines, 8 on a page. Character, Dēvanāgarī. Condition, good. Appearance, new.

Begins on fol. 1*a*. The other work herein is Mātaṅgalīlā 43*a*.

Complete.

Same work as the above.

# CLASS XIII.—ŚILPA ŚĀSTRA.

## No. 13032. अंशुमद्भेदः—काश्यपीयः
## AMŚUMADBHĒDAḤ : KĀŚYAPĪYAḤ.

Substance, paper. Size, 13⅜ × 8 inches. Pages, 522. Lines, 21 on a page. Character, Grantha. Condition, good. Appearance, new.

Complete 1 to 83 Paṭalas.

A treatise laying down rules for the construction of dwelling houses, palaces, storied mansions, temples, etc., and of windows, doors, porches, gate-ways, towers connected therewith, and for the making of images of Gods especially of the various manifestations of God Śiva. The work is attributed to Kāśyapa who is said to have learnt this science from God Śiva.

Copying is said to have been finished on Friday, the 30th day of the month of Citrai in the year Tāraṇa.

Deals with the following subjects.

१. कर्षणः.
२. प्रासादवास्तु.
३. वास्तुहोमः.
४. प्रथमेष्टकाविधिः.
५. उपपीठविधानम्.
६. अधिष्ठानविधिः.
७. नाललक्षणम्.
८. स्तम्भलक्षणम्.
९. फलकलक्षणम्.
१०. वेदिकालक्षणम्.
११. जालकलक्षणम्.
१२. तोरणलक्षणम्.
१३. वृत्तस्फाटितलक्षणम्.
१४. स्तम्भतोरणविधिः.
१५. कुम्भतललक्षणम्.
१६. वृत्तस्फुटितलक्षणम्.
१७. द्वारलक्षणम्.
१८. कम्पद्वारलक्षणम्.
१९. प्रस्तरलक्षणम्.
२०. गलविधानम्.
२१. शिखरलक्षणम्.
२२. नासिकालक्षणम्.
२३. मानोपकरणम्
२४. मानसूत्रादिलक्षणम्.
२५. नागरादिविधिः.
२६. गर्भन्यासविधि..
२७. एकतलविधानम्.
२८. द्वितलविधानम्.
२९. त्रितलविधानम्.
३०. चतुर्भूमिविधानम्.
३१. कूटादिलक्षणम्.
३२. पञ्चतलविधानम्.
३३. षड्भूमिविधानम्.
३४. सप्तभूमिविधानम्.
३५. वसुभूमिविधानम्.
३६. नवभूमिविधानम्.

**Beginning :**

शशिधरमहादेवं सर्वलोकैकनायकम् ।
माहेन्द्रमध्यगं शान्तं पार्वतीसहितं परम् ॥
देवदानवसिद्धाद्यैः सेवितं सुरपूजितम् ।
प्रणम्य देवचरणमेवं ब्रूयात् स काश्यपः ॥

शुचेत्परमसद्भावं(?) प्रसन्नात सृष्टिकारणम् ।
जगतामभिवृद्ध्यर्थं योगिनामुपकारकन् ॥
देवानां च हितार्थाय शिवज्ञानं परं महत् ।
महार्थमल्पग्रन्थं चाकर्षणाद्यर्चनान्तकम् ॥
अंशुमन्तमहातन्त्रात् त्वयोक्तं हि पुरार्थकम् ।
तन्त्रं तं वच(द) देवानां रुद्रानामधिकारिणाम् ॥
अल्पायुष्यादिधर्माणां नराणां त्वधिकारिणाम् ।
अनुग्रहार्थन्त्वेतेषां संक्षेपाद्वद मे प्रभो ॥
साधु साधु महाविप्र धन्वधा(यत्त्वया) परिचोदितम् ।
दुर्लभं तदहं वक्ष्ये शृणुष्वैकाग्रमानसः ॥
पुष्यमासादिषण्मासे माघमासेतेरे शुभे ।
दक्षिणे चाश्वयुङ्मासे श्रावणे कृत्तिका तथा ।
पूजितं कर्षणादीनां शेषमासा विवर्जिताः ॥
* * * *
पर्यग्निकरणं कृत्वा प्रोक्षयेत् पञ्चगव्यकैः ।
कर्षणं ह्येवमाख्यातं शृणु प्राष्वक(प्रासाद)वास्तुकम् ॥

Colophon:

इत्यंशुमाने काश्यपे प्रथमः कर्षणः पटलः ॥
* * * *
प्रासादवास्तुरेवं हि वास्तुहोमं ततः परम् ;
* * * *
इति काश्यपे प्रासादवास्तुर्द्वितीयः ॥

End:

कूटानां भागमानेन जात्यादिनियमं कुरु ॥
हस्तमानेन कूटानां जात्यादिनियमं विना ।
चतुर्भक्तिविशालं तु यथामञ्चं तथा भवेत् ॥

Colophon:

इत्यंशुमान(मद्)भेदे काश्यपे ग्रामलक्षणं त्र्यशीतितमः पटलः ॥

---

No. 13033. अंशुमद्भेदः, द्राविडटीकासहितः.

AMŚUMADBHEDAḤ WITH TAMIL MEANING.

Substance, palm-leaf. Size, $27\frac{1}{4} \times 1\frac{7}{8}$ inches. Pages, 126. Lines, 9 on a page. Character, Kanarese. Condition, injured. Appearance, old.

